THE

PRINCESS OF WALES

SARASVATI BHAVANA TEXTS

No. 79

(PART II)

---

EDITED

BY

DR. MANGAL DEVA SHASTRI,

M. A., D. Phil. (Oxon.),

PRINCIPAL,

GOVT. SANSKRIT COLLEGE, BENARES

---

THE

# TAUTĀTITAMATATILAKA

(PART II)

---

Printed by

*Kameshwar Pathak*

*at the Tara Printing Works, Benares City.*

1942

श्रीभवदेवविरचितं

# तौतातितमतातिलकम्

## द्वितीयाध्यायात्मको द्वितीयो भागः

THE

# TAUTĀTITAMATATILAKA

by

SRI BHAVADEVA

PART II

Critically edited with notes

by

'Mahamahopādhyāya'

Pt. A. CHINNASWAMI SASTRI,

Principal, College of Theology

and

Mīmāmsā-Nyāya-Sāhityāchārya

PT. PATTABHIRAMA SHASTRI,

Prof. of Mīmāmsā,

*Benares Hindu University,*

*Benares*

1942

* श्रीः *

ॐ नमो भगवते वासुदेवाय

श्रीभवदेवनिर्मितं

# तौतातितमततिलकम्

## द्वितीयाध्यायस्य प्रथमः पादः

### तत्र प्रथमं प्रतिपदाधिकरणम्

**भावार्थाः कर्मशब्दाः तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ २. १. १. ॥**

( सङ्गतिः )

प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम् । तत्र विध्यर्थवादमन्त्रस्मृतयस्तत्त्वतो निर्णीताः । गुणविधिर्नामधेयञ्च परीक्षितम् । तत्र सन्दिग्धानामर्थानां वाक्यशेषादर्थाच्चाध्यवसानमुक्तम् । तन्न प्रस्मर्तव्यम् । अनन्तरञ्च प्रधानाप्रधानानि परीक्षिष्यन्ते—भिन्नान्यभिन्नानि वेति । एष एवार्थो वर्णनीयो नान्यः । एष एवाध्यायसम्बन्धः । तदिह षड्विधकर्मभेदो वक्ष्यते—शब्दान्तरम्, अभ्यासः, संख्या, गुणः, प्रक्रिया, नामधेयमिति वक्ष्यमाण-

मनुकीर्त्यते, प्रदर्शितमुच्यमानं सुखं ग्राहयिष्यते, श्रोतुश्च बुद्धिस्स-माधीयते । तदेतन्नानाकर्मलक्षणमित्यध्यायमाचक्षते । अतोऽन्य-दुपोद्घातप्रसक्तानुप्रसक्तश्च ।

प्रथमं तावदिदं चिन्त्यते—प्रथमेऽध्याय इदमुक्तम्—'चोदनालक्षणोऽर्थो धर्म' इति । चोदना च क्रियाया अभिधायकं वाक्यम् , वाक्ये च पदानामर्थः, तत्र किं पदेन पदेन धर्म उच्यते ? उत सर्वैरेकः ? इति । अत्र भाष्यकारेण 'प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम्' इति सप्रपञ्चमभिधाय 'अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते, भिन्नान्यभिन्नानि वा' इत्यनेन प्रथमद्वितीययोरध्याययोर्हेतुहेतुमद्भावरूपस्सम्बन्धो दर्शितः । तत्र यद्यपि कृत्स्नवेदार्थविचारस्यैव प्रमाणलक्षणाधीनत्वं, तथापि कर्मभेदलक्षणापेक्षत्वादन्येषां कर्मभेदलक्षणस्य प्रमाणलक्षणमात्रापेक्षत्वादिदमेवानन्तरमारब्धव्यम् । तथा च भाष्यम्—'एष एवार्थो वर्णनीयो नान्यः' इति । तदुक्तम्—

> शेषशेष्यादयस्सर्वे कर्मभेदनिबन्धनाः ।
> कार्ये ज्ञातेऽधिकारस्स्यादुपदेशोऽतिदेशधीः ॥ इति ।

(तं. वा., पृ. ३७१. पूना सं०)

अत्र चापूर्वभेदानुबन्धी कर्मभेदोऽध्यायार्थः । धात्वर्थाव-च्छिन्ना च भावना कर्मेति लोकप्रसिद्धम् । यद्यदि धात्वर्थात्फलम्,

तदा तदंवच्छिन्नाया एव भावनाया अपूर्वानुबन्धात्तस्यैव प्रतिपाद-नमुचितम् । अथ नामार्थात्, तदा धात्वर्थस्यैवापूर्वानुबन्धित्वात्किं कर्मभेदप्रतिपादनेनेति । तदत्र नामार्थस्य फलसाधनत्वनिराकर-णेन भावार्थस्यैव फलसाधनत्वं प्रतिपादयितुमुपोद्धातभूतं भावा-र्थाधिकरणमारब्धव्यम्, यद्युभयसाधनत्वनिरासेनैकस्यैव फलसा-धनत्वम् । द्वयोः फलसाधनत्वे कस्मादेकस्मादिति सन्देहाभावात् । तदर्थमुपोद्धातभूतं प्रतिपदाधिकरणमेव प्रथममारभ्यते ।

( विषयसंशयौ )

तत्र "श्येनेनाभिचरन् यजेत" ( षड्वि. ब्रा., ३. ८. ) "चित्रया यजेत पशुकामः" ( तै. सं., २. ४. ६. १.) इति श्रुतौ सन्देहः—किं पदेन पदेन धर्म उच्यते ? उत सर्वैरेकः ? इति । अयमर्थः—किं पदेन पदेनाभिहितस्यार्थस्य फलसम्बन्धाविशेषेण धर्मत्वम्? अथे-तरानुगृहीतस्यैकस्यैवेति ।

( पूर्वपक्षः )

तत्रायं पूर्वपक्षिणोऽभिसन्धिः-"श्येनेनाभिचरन् यजेत" इत्यत्र विध्यवरुद्धा भावना अभिचाररूपफलसाधनमपेक्षमाणा वाक्योपात्तं नामार्थं धात्वर्थश्चाविशेषादुभयमेव साधनमनुमन्यते । ननु पदश्रुत्या सन्निकृष्टस्य धात्वर्थस्यैव फलभावनायाः करणत्वेन

प्रथममन्वयावगतेः तदवरुद्धायाश्च तस्यां विप्रकृष्टस्य नामार्थस्यान्वयासम्भवात् कथमविशेषेणोभयोः समन्वय इति । मैवम्; स्यादेवं यदि धात्वर्थस्य करणत्वं श्रुतं भवेत्, किन्तु फलभावनाकाङ्क्षया कल्पनीयं तत् । तेन यद्यपि स्वरूपतः सन्निकृष्टो धात्वर्थः, तथापि कल्पनीयकरणभावेन विप्रकृष्टोऽसौ । नामार्थो यद्यपि स्वरूपतो विप्रकृष्टः, तथापि तस्य करणत्वेन श्रुतत्वात्तेन रूपेण तस्य सन्निकृष्टत्वमेव । तेन सन्निकर्षविप्रकर्षाविशेषाद्द्वयोरेव सापेक्षत्वात्फलसाधनत्वम् ।

न चैवं सति परस्परनिरपेक्षोभयसाधनत्वावगतेर्विभागलक्षणो वाक्यभेद इति वक्तव्यम् । अरुणैकहायनीविशिष्टक्रयभावनाविधानवन्नामार्थधात्वर्थविशिष्टैकफलभावनाविधानेन समुदाये वाक्यपरिसमाप्तेर्वाक्यभेदाभावात् । यथा तत्र परस्परापेक्षावशात् द्रव्यस्य गुणाश्रयत्वेन, गुणस्य च द्रव्यावच्छेदकत्वेनान्वयः, तथेहापि नामार्थस्य धात्वर्थाश्रितस्य धात्वर्थस्य च नामार्थसहितस्य साधनत्वात्परस्परापेक्षायामन्योन्यान्वय इति । न चैवं सत्यनेकादृष्टकल्पनादोषोऽपि; नामार्थधात्वर्थयोर्युगपदेकापूर्वसाधनत्वेनानेकादृष्टकल्पनाप्रमाणाभावात् । भवतु वानेकादृष्टकल्पना, तथापि 'प्रमाणवन्त्यदृष्टानि कल्प्यन्ते सुबहून्यपि' इति न्यायादनेकादृष्टकल्प-

नापि न दोषायेति । अतोऽविशेषाद्द्वयोरेव नामार्थधात्वर्थयोः फलान्वय इति । तदुक्तम्—

ऐकरूप्येण सम्बन्धः प्रधानेन च सिद्ध्यति ।
तस्मात्फलपदेनैव सर्वं सम्बध्यते पदम् ॥ (तं. वा., पृ. ३७३)

इत्येवं प्राप्तेऽभिधीयते—

( सिद्धान्तः )

भवेदेवं यद्यत्र करणयोस्समुच्चयस्सम्भवेत् । समानकालभाविनोर्हि समुच्चयो भवति । न चात्र करणीभावात्तयोर्नामार्थधात्वर्थयोस्सहभावस्समस्ति । निष्पन्नस्य हि धात्वर्थस्य करणत्वं वक्तव्यम् । नामार्थस्य करणत्वं धात्वर्थनिष्पादकत्वेनैव । तच्च धात्वर्थात्प्रागेव । न हि निष्पन्ने धात्वर्थे धात्वर्थनिष्पादकमस्ति । अथोच्यते—मास्य भवतु नामार्थस्य स्वरूपतः साहित्यम्, कार्यतस्तु भविष्यति । तथाहि—यस्मिन्नेव काले नामार्थेन धात्वर्थो जन्यते, तदैव तत्साहित्यमपूर्वान्तरं जनितम्, अतस्तद्द्वारेण साहित्यसद्भावाद्युक्तस्समुच्चयः । एतच्च शब्दावगतकरणत्वान्यथानुपपत्त्या कल्प्यमानं न दोषमावहतीति । तदयुक्तम्; स्यादेवं यदि द्वयोरेव फलभावनाकरणत्वं श्रौतं भवेत्, किन्तु भावनाकाङ्क्षया तत्कल्पनीयम् । तत्र धात्वर्थस्य सन्निकृष्टस्य करणत्वं फलभावनासम्बन्धा-

त्कल्पनीयम् । नामार्थस्य च क्लृप्तकरणभावस्य विप्रकृष्टस्य फलभावनासम्बन्धः कल्पनीयः । कल्प्यमानं तदेव कल्पयितुमुचितं यत्र नानेकादृष्टकल्पना भवति । उभयकरणत्वेन समुच्चयसिद्ध्यर्थमवश्यमेवापूर्वान्तरं कल्पनीयमित्युक्तमेव ।

न चैकस्य करणत्वेऽन्यतरस्य वाक्यान्वयो न सम्भवति । इतरानुग्राहकत्वेनैवेतरान्वयोपपत्तेः । तेन यदि सन्निकर्षलोभेन धात्वर्थः करणम्, तदा नामार्थस्य करणत्वं धात्वर्थगतमेव । अथ श्रौतकरणत्वलोभेन विप्रकृष्टस्यापि नामार्थस्य करणत्वम्, तदा धात्वर्थस्य तद्व्यापारत्वेनैव समन्वयान्न करणत्वमपि कल्पनीयम् । तदुक्तं भाष्ये—'यदैकस्मादपूर्वं तदेतरत्तदर्थम्' इति ।

न चैवं धात्वर्थस्य फलभावनायां नामार्थस्य च धात्वर्थे विधानाद्वाजपेयोक्तवैरूप्यप्रसङ्गः । अथ तत्परिहारार्थं मत्वर्थलक्षणाश्रीयते, तदा लक्षणैव दोष इति वरमपूर्वद्वयकल्पनैवेति । उच्यते—स्यादेवमपूर्वसम्बन्धानुसारेणैवेयं भवन्ती मत्वर्थलक्षणा यद्यपूर्वकल्पनातो ज्यायसी न भवेत् । तथाहि—उत्पत्तिपूर्वकः खलु विनियोगः । उत्पत्तिश्च न धात्वर्थस्वरूपज्ञानमात्रम्, विनियोगावस्थायामपि धात्वर्थस्वरूपज्ञानाविशेषात्, किन्तु भावनासाध्यतया धात्वर्थस्वरूपज्ञानम् । तत्र यद्यप्युत्पत्तिविधेरपुरुषार्थभूतत्वाद्धात्वर्थस्य न स्वावरुद्धा भावना

साध्यत्वेन पर्यवस्यति, तथाप्यस्यासाधितस्य साधनत्वासम्भवाद्भाविविनियोगविधिसाध्यफलभावनाकरणत्वाच्चानुगुणतया भावनासाध्यधात्वर्थस्वरूपप्रतिपत्तिपर एव भवति। तथाभूतेनैव धात्वर्थेन श्येनादिर्नामार्थो विनैव मत्वर्थलक्षणया करणत्वेन सम्बध्यते। तेनायमर्थो भवति—'श्येनेन यागं कुर्यादित्येवम्' इति। एवं सति विनियोगदशायां गृहीतश्येनादिकारकस्यैव यागादेर्धात्वर्थस्य करणत्वात्करणस्य करणान्तरान्वयासम्भवात्पूर्वप्रतीतसम्बन्धानुरोधेन मत्वर्थलक्षणा न दोषमावहति। तस्मादपूर्वकल्पनालाघवेनैकस्मादेव श्येनवतो यागात् यागवतो वा श्येनादपूर्वमिति सिद्धम्। तदुक्तम्—

फलेन यस्य सम्बन्धः ततोऽपूर्वं प्रकल्प्यते।
तद्रूपत्वोपपत्तौ तु न युक्ता बहुकल्पना॥ इति।

(तं. वा., पृ. ३७३)

इति प्रथमं प्रतिपदाधिकरणम् ॥१॥

## अथ द्वितीयं भावार्थाधिकरणम्

### ( संशयपूर्वपक्षौ )

यदैकस्मादपूर्वं तदा सन्देहः—किं भावशब्देभ्यः? उत द्रव्यगुणशब्देभ्यः? इति। अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यद्यपि

धात्वर्थनामार्थयोरनियमेनापि सम्बन्धादनेकादृष्टकल्पनापरिहारो भवत्येव, तथापि सकृदुच्चरितस्य श्येनादिवाक्यस्य कदाचिन्नामार्थ-प्राधान्येन धात्वर्थगुणभावबोधकत्वम्, कदाचिद्धात्वर्थप्राधान्येन नामार्थगुणभावबोधकत्वम् । एतच्च वैरूप्यलक्षणवाक्यभेदप्रसङ्गान्न सम्भवति । तदुक्तम्—

> प्रधानं फलसम्बन्धि तत्सम्बन्ध्यङ्गमिष्यते ।
> प्रधानाङ्गत्वमेकस्य न चैकत्रावकल्पते ॥ इति ।

(तं. वा., पृ. ३७४)

तस्मान्नियमेनैकस्यैकफलसम्बन्धो वक्तव्यः । तत्र सिद्धस्य करणत्वयोग्यत्वान्नामार्थस्य सिद्धत्वात्करणवाचितृतीयाविभक्तियो-गित्वाच्च धात्वर्थस्य साध्यत्वेन करणत्वायोग्यत्वात्करणवाचितृ-तीयाविभक्त्यभावाच्च नामार्थादेव फलम् । न च वाच्यम्—फल-साधानत्वादाश्रयसम्बन्धविधाने फलसम्बन्धविधाने च वाक्यभेद इति । यथा धात्वर्थस्यैव फलकरणत्वे मत्वर्थलक्षणया नामार्थविशिष्ट-स्यैव फलकरणत्वान्न वाक्यभेदस्सिद्धान्ते, तथा नामार्थस्यापि मत्वर्थ-लक्षणया धात्वर्थविशिष्टस्यैव फलकरणत्वात्कुतो वाक्यभेद इति । ननु भवतु धात्वर्थस्याश्रयत्वम्, तथापि यथा नामार्थस्य धात्वर्थनि-ष्पादकत्वमेव दृष्टोपकारकत्वं न तथा नामार्थे धात्वर्थस्य दृष्टो-पकारकत्वमस्तीति भावार्थगतधात्वर्थजन्यादृष्टकल्पनायां प्रतिपदपूर्वप-

त्तवदत्राप्यदृष्टकल्पनागौरवमेवेति । नैवम्; गोदोहनस्येव प्रणय-
नेनासमर्थस्यापि धात्वर्थेन कारकत्वसम्पादनरूपोपकारजननात् ।
नियमादृष्टं तु द्रव्यविशेषनियमात्सिद्धान्तेऽपि समानमित्येवं
प्राप्तेऽभिधीयते—

( सिद्धान्तः )

भवेदेवं यदि विधिश्रुतिः समानपदोपात्तस्य धात्वर्थस्य प्रथमं फलभावनायां करणत्वं न प्रतिपादयेत् । तथाहि—यजेतेत्यत्र विध्यवरुद्धभावनाविषयत्वेन यागः प्रतीयते । भावनाविषयत्वञ्च भावनाकर्मत्वमेव । भावना च विध्यवरुद्धा पुरुषेप्सितमेव भाव्यं गृह्णाति । कर्मभूतमपि धात्वर्थं नेप्सितकर्मत्वेनानुमन्यते, किन्त्वनीप्सितकर्मत्वेनैव । पुरुषसमीहितफलोद्देशेनैव प्रवृत्ता कृतिस्तदेवानीप्सितकर्मतया गृह्णाति, यदेतत्साधनभूतम्, ओदनोद्देशप्रवृत्तेव पाकं तत्साधनत्वम्, साधनान्तरानवरुद्धे साध्ये भवतु स्वकारणत्वमेवेति । तेन यजेतेत्यत्र विधिश्रुतितो धात्वर्थस्यैव फलभावनाकरणत्वावगमात् तृतीयान्तस्यापि नामार्थस्य धात्वर्थकरणत्वेनैवान्वय इति सिद्धम् ।

तदुक्तम्—

आख्यातवर्ती धात्वर्थः सिद्धरूपः प्रतीयते ।
तस्मिन् फलवतीष्टे तु नाम्नो दृष्टार्थतेष्यते ॥ इति ।

(तं. वा., पृ. ३८८)

नन्वेवं सति "गोदोहनेन पशुकामस्य प्रणयेत्" "दध्नेन्द्रियकामस्य जुहुयात्" ( तै. ब्रा., २. १. ५. ६. ) इत्यत्रापि समानन्यायेन धात्वर्थस्यैव फलकरणत्वान्न गुणफलसम्बन्धस्स्यादिति । नैवम्; विधिश्रुतिरेव धात्वर्थकरणत्वे प्रमाणमित्युक्तम् । विधिश्चाप्राप्तविषयः । यत्र च फलकरणस्यैव धात्वर्थस्य प्रकरणप्राप्तस्यानूद्यमानत्वान्न तस्य विधिव्यापारविषयत्वमिति गुणसङ्क्रान्तो विधिः प्राप्ताप्राप्तविवेकेन प्रकृतं धात्वर्थमाश्रित्य तत्र गुण एव फले सम्बन्धनीय इति । इह तु धात्वर्थस्यैव विधिविषयत्वादुक्तन्यायेन तस्यैव करणत्वमिति वैषम्यम् ।

ननु नामार्थस्य फलकरणत्वनिराकरणेन धात्वर्थस्य फलकरणत्वमिह साध्यम् । तच्च बादर्यधिकरणस्वर्गकामाधिकरणाभ्या[1][2]मेव सिद्धम् । तथाहि बादर्यधिकरणसूत्रम्—'कर्माण्यपि जैमिनिः फलार्थत्वात्' ( जै. सू., ३. १. ४. ) इति । अनेन कर्मणामेव फलसाधनत्वमित्युक्तम् । तथा स्वर्गकामाधिकरणसूत्रम्— 'असाधकन्तु तादर्थ्यात्' (जै. सू., ६. १. २.) इति । अनेनाप्यफलार्थत्वे सति कर्मणः साधकपुरुषशून्यत्वप्रसङ्गादिति फलसाधनत्वमेव प्रतिपाद्यते । न च नामार्थस्य फलकरणत्वनिराकरणार्थमेवेदमधिकरणमिति द्रष्टव्यम्, तथाप्यर्थसिद्धत्वात् । यदा प्रतिपदाधिकरण-

---

१. पू. मी., ३. १. ३. २. पू. मी., ६. १. १.

सिद्धान्ते एकस्य फलसाधनत्वमिति निरूपितम्, बादरिस्वर्गकामाधिकरणाभ्याञ्च धात्वर्थस्य फलकरणत्वमिति प्रतिपादितम्, तदार्थादेव नामार्थस्य फलकरणत्वनिराकरणात्तदर्थमिदमधिकरणमुपपद्यत इति । मैवम्; न हि बादर्यधिकरणे धात्वर्थस्य फलकरणत्वं प्रतिपाद्यते, किन्त्वेतदधिकरणसिद्धेनैव धात्वर्थस्य फलकरणत्वेन दृष्टोपकारदर्शननिबन्धनं द्रव्यगुणसंस्काराणामेव शेषत्वमिति बादरेर्मतं निराक्रियते । स्वर्गकामाधिकरणे चैतदधिकरणसिद्धमेव कर्मणः फलसाधनत्वमाश्रित्य फलकामस्य कर्मस्वधिकारः प्रतिपाद्यत इति न किञ्चिदनुपपन्नम् । सूत्रन्तु वार्तिकेनैव व्याख्यातम् ।

तदुक्तम्—

भावार्थाः कर्मशब्दा ये तेभ्योऽपूर्वक्रियागतिः ॥
तैः कुर्याद्यजिना स्वर्गमेष ह्यर्थो विधीयते ॥ इति ।

(तं. वा., पृ. ३७५)

इति द्वितीयं भावार्थाधिकरणम् ॥ २ ॥

## अथ तृतीयमपूर्वाधिकरणम्

### चोदना पुनरारम्भः ॥ २. १. ५. ॥

( विषयसंशयौ )

कथं पुनरिदमवगम्यते ? अस्ति तावदपूर्वमिति कृत्वा न नामार्थेभ्यः किन्तु भावार्थेभ्य एवेति निरूपितम् । इदानीमपूर्वमेव किमस्ति नास्तीति विचार्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—न तावदपूर्वं प्रत्यक्षेणोपलभ्यते । नाप्यनुमानेन, तत्प्रतिबद्धलिङ्गाभावात् । न च शब्देन । न च लोकेऽपूर्वप्रतिपादकं किञ्चित्पदमवगम्यते । अपूर्वपदन्त्वनन्वर्थनामतया अभावप्रतिपादकमेव । न चापदार्थीभूतस्य वाक्यार्थत्वमस्ति । नाप्युपमानेन, तस्य सादृश्यमात्रविषयत्वात् । नापि दृष्टार्थापत्त्या, जगद्वैचित्र्यस्य स्वभावादेवोपपत्तेः । नापि श्रुतार्थापत्त्या, श्रुतस्य यागफलसाधनत्वस्यान्यथैवोपपत्तेः । न हि सर्वत्र कार्यसमसमयभाविनः कारणत्वम्, कार्यकारणयोर्यौगपद्याभावात् । किन्तर्हि पूर्वभाविन एव । अतः पूर्वभावित्वमात्रेण कर्मणः साधनत्वं भविष्यतीति किमपूर्वेण ? न च वाच्यम्—भवत्वनन्तरपूर्ववृत्तस्य साधनत्वम्, चिरातिवृत्तस्य तु कथमपूर्वेण विना साधनत्वमुपपद्यतामिति । यतः प्रकल्प्याप्यपूर्वं चिरातिवृत्तस्यैव कर्मणः साधनत्वं

वाच्यम् । न ह्यपूर्वं साधनम्, कर्मण एव साधनत्वात् । नापि फलम्, स्वर्गस्यैव फलत्वात् । अथापूर्वद्वारेण कर्मण एव साधनत्वमित्युच्यते, ततः किमपूर्वं कर्मणः शक्तिः ? व्यापारो वा ? न तावच्छक्तिः ; शक्तिर्हि शक्तिमदाश्रया भवति । न च शक्तिमत्यतिक्रान्ते शक्तिस्समस्ति । नापि व्यापारः ; सर्वत्र खलु व्यापाराविष्टस्य व्यापारिण एव साधनत्वं भवति, न तु व्यापारमात्रस्य । ननु घृतपानपूर्वानुभवयोरपि धातुसाम्यं संस्कारो वा प्रत्यक्षादिभिरवगम्यते । कल्पनाहेतुत्वं लोके दृष्टमेव, तथात्राप्यतीतस्यैव कर्मणोऽपूर्वान्तरव्यापारद्वारेण फलसाधनत्वं भविष्यतीति । मैवम् ; तत्राप्यतीतयोरेव घृतपानपूर्वानुभवयोरपूर्वकल्पनावदत्राप्यन्यथैवोपपत्तेर्निरस्तमेवेति । यत्तु कृष्यादौ दृश्यत एवान्तरालकार्यं, तत्र व्यवहितपितामहप्रपितामहादिवत्कारणत्वमेव न त्वन्येषां तद्व्यापारत्वम् । तेन सर्वत्र पूर्वभाविन एव कारणत्वम् । इयांस्तु विशेषः—कस्यचिदनन्तरपूर्वभाविनः, कस्यचिच्चिरपूर्वभाविनस्तदिति यथाप्रमाणमङ्गीकरणीयमिति नास्त्यपूर्वे किञ्चित्प्रमाणम् ।

तदुक्तम्—

तस्मात्कृतत्वमात्रेण प्रधानं पुरुषे फलम् ।
अङ्गानि च प्रधानेषु जनयन्तीति गम्यते ॥ इति ।

(तं. वा., पृ. ३४३)

( प्रभाकरमतम् )

अत्र केचित्—शब्दाभिधेयमेवापूर्वमिति समाधानमभिदधति। तथा हि—लोके तावत्स्तनपानादिप्रवृत्तिप्रभृतिसकलव्यवहारेष्वेव कार्यावगतिः प्रवृत्तिनिमित्तमिति स्वसन्ताने समधिगतम्। तेन वृद्धव्यवहारेषु हि श्रवणानन्तरं चेतनप्रवृत्तिमवगम्य स्वर्गनामानुसारेणैतदेव तावद्व्युत्पाद्यमानेनावगतम्—यत्कार्यावगतिरेव प्रवृत्तिनिमित्तं, सा च तद्भावभावितया लिङ्शब्देन कृतेति। तत्र यथा लोके क्रियाकार्यमेव प्रवृत्तिहेतुतया समधिगतम्, तथा यो हि यत्कामः स खल्वव्यवहितमेव तदुपायं कार्यतयावगच्छति। यथा तृप्तिकामो भोजनम्। ओदननिष्पत्तिकामश्च पाकम्। एवं सर्वत्र कृष्यादावप्यूहनीयम्। तेन यथा यथा कामना सम्भवति, तथा तथा तदव्यवहितोपाय एव कार्यतां सम्भावयतीति व्युत्पत्तिः। एवं च सति "स्वर्गकामो यजेत" इत्यादिषु स्वर्गकामनाविशिष्टपुरुषसम्बन्धिकार्यं लिङादिभिः प्रतिपादनीयम्। न च स्वर्गकामः कालान्तरभाविनः स्वर्गस्य व्यवहितां यागादिक्रियां तदुपायतया कार्यत्वेन बोद्धुं शक्नोति। अव्यवहितोपायस्यैव लोके कार्यत्वेनावगमस्योक्तत्वात्। तेनाव्यवहितोपायकार्यत्वव्युत्पत्त्यनुरोधेन क्रियातिरिक्तं कालान्तरस्थायि मानान्तरवेद्यं पुमांसमाश्रितं नियोज्यान्वययोग्यं लिङादिशब्दाभिधेयमपूर्वमेव कार्यमर्थापत्त्या कल्प्यत इति। तच्च

यागस्य फलसाधनत्वनिर्वाहाय परैरपि कल्पनीयम् । अस्माभिश्चा-व्यवहितकाम्योपायकार्यव्युत्पत्तिबलात्तदेव प्रधानं फलोपायभूतं लिङ्शब्दाभिधेयं स्वीकृतमिति नानुपपन्नम् ।

नन्वेवं सत्यर्थापत्तिप्रमाणकत्वेनापूर्वत्वव्याहतिः स्यात् । सत्यम् ; यद्यपूर्वेऽर्थापत्तिः प्रमाणं भवेत्, किन्तर्हि तद्विषयलिङा-दिशब्देन तात्पर्यविषयतया तदुपस्थितौ न तत्र प्रामाण्यम् । यथा परमत एव विश्वजिदादौ यद्यपि स्वर्गकामादिपदे श्रुतार्थापत्त्या क-ल्प्यमाने तदर्थोऽपि विशेषणतयोपस्थित एव, तथापि न तत्रार्थापत्तिः प्रमाणं भवेत्, किन्तर्हि ? वाचकशब्द एव । तद्वाचकशब्दे तु सा प्रमाणम् । तद्वदिहापि नापूर्वरूपेऽर्थेऽर्थापत्तिः प्रमाणम् । किं तर्हि ? तद्गोचरलिङादिशब्दतात्पर्य एव । अवधृततात्पर्यश्च लिङा-दिशब्द एव तत्र प्रमाणमिति । एवञ्च तत्रैव लिङ्शब्दस्य मुख्य-त्वम् । न हि सति सम्भवेऽनेकार्थत्वं शब्दस्य युक्तमिति लिङ्श-ब्दस्य क्रियाकार्यत्वं लाक्षणिकमेव ।

नन्ववगतमुख्यार्थस्यान्वयानुपपत्तिर्हि लक्षणाकारणम् । न च लोके लिङ्शब्दस्य मुख्यभूतोऽपूर्वोऽर्थो विदितपूर्वः । तदनवगमे च कथं लक्षणेति । मैवम् ; प्रामाणिकानामुत्तरकालमयं विवेकः,

इतरेषां त्वपभ्रंशादिवत् । न च लिङ्शब्दातिरिक्तप्रमाणमपूर्वमवगम्यते। क्रिया तु प्रमाणान्तरावगतेति सैव लक्षणाविषयो नापूर्वम् । सम्बन्धश्च यद्यपि लौकिकभोजनादिक्रियया सह साक्षादपूर्वस्य नास्ति, तथापि यागादिक्रिया तावदपूर्वसम्बद्धा, तद्गतं च क्रियात्वं भोजनादिक्रियास्वप्यस्तीति परस्परसम्बन्धाल्लक्षणोपपत्तिरिति ।

ननु काम्यस्वर्गविशिष्टः पुरुषो व्यवहितोपायतया क्रियां विहायाव्यवहितोपायमपूर्वरूपं कार्यं प्रवृत्तिहेतुतया लिङभिधेयं चेन्मन्यते, एवं तर्हीष्टोपायतैव प्रवृत्तिहेतुरस्तु लिङभिधेया च, किमानुषङ्गिककार्यावगमेनेति । उच्यते—कस्येष्टोपायता प्रवृत्तिहेतुर्लिङभिधेयता च भवदभिमता । न तावद्यागस्य, नापि कृतेः, न द्वयोरपि, व्यवहितत्वेनाव्यवहितकाम्योपायत्वाभावात् । अव्यवहितकाम्योपायस्यैव कार्यत्वेन लिङभिधेयत्वस्वीकारात् । अथाव्यवधानादपूर्वस्यैव, तदयुक्तम् ; परमतेऽपि विधितः पूर्वमपूर्वस्यानवगतत्वात् । लिङादिशब्देनैवापूर्वमभिधातव्यं, तद्गतेष्टोपायत्वं च । अस्मन्मते त्वपूर्वमात्रमेव कार्यरूपेणाभिधीयत इति महानयं विशेषः । अतः शब्दाभिधेयमेवापूर्वमिति ।

( प्रभाकरमतखण्डनम् )

अत्रोच्यते—भवेदेवं यदि व्युत्पत्तिविरहमहानलज्वालापर-

ष्परापरिहारो न भवेत् । तथाहि—यत्तावदुक्तं स्तनपानादिप्रभृति सकलव्यवहारेष्वेव कार्यावगतिः प्रवृत्तिनिमित्तं स्वसन्ताने समधिगतमिति । तदयुक्तम् ; व्यभिचारात् । कृतिसाध्यं हि कार्यमित्यवगतं लोके, कृत्यनन्तरमुत्पत्तुमर्हत्वं लोके विषभक्षणकण्टकमर्दनादिष्वप्यविशिष्टम् । न हि विषभक्षणे कण्टकमर्दने वा कृत्यनन्तरोत्पत्त्यर्हत्वं न सम्भवति । न च तस्य स्वसन्ताने प्रवृत्तिहेतुत्वमनवगतम् । अथानिष्टोपायतया न तत्र प्रवृत्तिः । एवं तर्हि तदागमन्यायेनेष्टोपायतैव प्रवृत्तिहेतुरस्तु, किं कार्येणेति ।

यदपि केनाप्युक्तम्—न कृत्यनन्तरोत्पत्त्यर्हत्वं कार्यत्वम्, किन्तु कृतिप्रयोजनत्वे सति कृत्यनन्तरोत्पत्त्यर्हत्वम् । प्रयोजनं च तदेवोच्यते—यदवगतमिच्छाप्रवृत्तौ कारणम् । न चेष्टोपायतैव परमवगता सतीच्छाप्रसवकारणम्, किन्तु इष्टतदुपायानिष्टपरिहारतदुपायानां चतुर्णामेवेच्छाप्रसवहेतुत्वम् । सकलकार्यस्यैव चानियतकारणत्वासम्भवादेतच्चतुष्टयानुगतमेवेच्छोत्पत्तिकारणं वक्तव्यम्, चतुर्ष्वन्यतमत्वमेव……एतदेव वा कृतिप्रयोजनत्वम् । न हि विषभक्षणे कण्टकमर्दने वा एवम्भूतकृतिप्रयोजनत्वे सति कृत्यनन्तरोत्पत्त्यर्हत्वमस्तीति न तेन व्यभिचार इति ।

तदेतदर्थशून्यं भ्रामकमेव परं वचनम् । न हीष्टोपायाति-

रिक्ताऽन्या कोटिस्समस्ति, अनिष्टपरिहारस्यापीष्टत्वादनिष्टपरिहारोपायस्यापीष्टोपायत्वात् । तत्र चेच्छाप्रसवहेतुत्वं स्वभावसुन्दरत्वादिष्टस्यैव परं न त्विष्टोपायस्य, अप्रियत्वेन स्वतो दुःखहेतुतयेच्छोत्पादकत्वासम्भवात् । किन्तु फलमेव स्वगतामिच्छामुत्पाद्य स्वोपायतया तत्रापीच्छामुत्पादयति । एतच्च लिप्साधिकरण[1] एव प्रपञ्चितम् । तेन साधनस्येच्छाजनकत्वान्न प्रयोजनत्वम् । अतः कथं कृतिप्रयोजनत्वविशेषितमपि कार्यत्वं प्रवृत्तिजनकमिति । अथ तन्मा भवत्विष्टोपायस्येच्छाजनकत्वम्, इच्छाविषयत्वं तावदस्ति । न च विषभक्षणकण्टकमर्दनयोरिच्छाविषयत्वमस्ति । तेनेच्छाविषयत्वविशेषितमेव कार्यं प्रवृत्तिहेतुर्भविष्यतीति । तदप्ययुक्तम्; साधनस्य हीच्छाविषयत्वं फलजन्यमित्युक्तम् । तच्च फलसाधनत्वावगमाधीनमेवेति तदेव प्रवृत्तिनिमित्तम् । तेनेच्छाद्वारेणेष्टोपायताया एव प्रवृत्तिहेतुत्वं लोकेऽपीति कार्यस्य प्रवृत्तिहेतुत्वे व्युत्पत्तिविरह एवेति ।

भवतु वा लोके कार्यस्य प्रवृत्तिहेतुत्वम्, तथापि वेदेऽपूर्वरूपकार्योपस्थितिस्तु कुतः ? तथा हि—किमत्र लिङभिधेयं प्रवृत्तिनिमित्तं कार्यशब्देनाभिमतम्, किं कृत्युद्देश्यं प्रधानं परम्परया कृति-

१. पू. मी., ४. १. १.

साध्यम्? अथ साक्षादेवान्योद्देशप्रवृत्तकृत्युत्पाद्यम्? अत्र न तावत्पूर्वः ; तथात्वे फलस्यैव कार्यत्वात् । न हि कृत्युद्देश्यं प्रधानं परम्परया कृतिसाध्यं फलातिरिक्तं लोके दृष्टम् । नापि द्वितीयः ; तथात्वे च धात्वर्थस्यैव कार्यत्वात् । न हि साक्षादन्योद्देशप्रवृत्त-कृत्युत्पाद्यं धात्वर्थातिरिक्तं लोके समधिगतम्, अपूर्वं त्वेतदुभयरूपा-भावात् कुतः कार्यम्? अतो यदुक्तमव्यवहितकाम्योपायत्वमेव कार्यत्वमिति लोके समधिगतमिति, तन्निरस्तम् । एतदुभयरूप-रहितस्य कार्यत्वासम्भवात् ।

यदपि लोके स्वसन्तानानुसारेण कार्यावगमः प्रवृत्तिहेतुरित्यस-द्ध्यारोप्याभिहितम्, तदपि साक्षादन्योद्देशप्रवृत्तकृत्युत्पाद्यक्रिया-रूपकार्यमेव । वेदेऽपि यदि तथाभूतकार्यावगमः प्रवृत्तिहेतुरभिधी-यते तदिष्यत एव । न च वाच्यम्—यदनन्तरं यन्निष्पद्यते तदेव तदुद्देशप्रवृत्तकृतिनिष्पाद्यं भवति । तृप्त्युद्देशप्रवृत्तकृतेरिव भोजनम् । न च यागानन्तरं फलं निष्पद्यते ; अतो न यागस्य फलोद्देशप्रवृत्त-कृतिसाध्यत्वमिति । यतो लक्ष्यवेधलक्षणोद्देशप्रवृत्ता हि कृतिर्ज्याकर्षण-विमोकमात्रनिवृत्ता, न च तदनन्तरं लक्ष्यवेधो निष्पद्यते । किन्तर्हि? वेगाख्यसंस्कारपरम्परया चिरेणैव । तेन क्वचिदनन्तरस्य, क्वचिद्व्यव-हितोपायस्यापि लोके कार्यस्य दृष्टत्वादव्यवहितोपायत्वमेव कार्य-त्वमिति नास्ति व्युत्पत्तिः ।

अथ तत्रापि लक्षवेधाव्यवहितक्रियाक्षणस्यैव कार्यत्वमित्युच्यते ; तत् किं कृत्युद्देश्यत्वेन कृत्युत्पाद्यत्वेन वा ? न तावदुद्देश्यत्वेन ; लक्षवेधस्यैवोद्देश्यत्वात् । नापि साक्षात्कृत्युत्पाद्यत्वेन ; आद्यक्रियाक्षणमात्रोत्पादनिवृत्तत्वात् कृतेः । तेन यथावान्तरव्यापारद्वारेण व्यवहितोपायस्यापि लक्षवेधस्य कार्यत्वम्, तथा यागस्यापि स्वीक्रियतां किमपूर्वकार्यस्वीकारव्यसनेनेति । तेन फलधात्वर्थातिरिक्तापूर्वाख्यकार्यस्वरूपे व्युत्पत्तिविरहः । भवतु वापूर्वमेव कार्यम्, तथापि विधिशब्दाभिधेयत्वं तस्य कुतः ? तथाहि—स्वर्गकामपदसमभिव्याहारान्यथानुपपत्त्या अव्यवहितकाम्योपायरूपे कार्ये लिङ्शब्दस्य शक्तिः कल्पनीया । तथा च सत्यर्थापत्तिविषयत्वात्तस्यापूर्वत्वव्याहतिर्दुर्निवारैव ।

यदुक्तमर्थापत्तेरुपस्थापकत्वमात्रम्, अपूर्वमामाण्यं पुनर्लिङ्शब्दवाच्यत्व एव । यथा विश्वजिदादौ स्वर्गकामपदकल्पनायामिति । तदयुक्तम् ; विश्वजिदादिषु हि स्वर्गरूपस्य सर्वान् प्रत्यविशिष्टत्वेनावगतपूर्वतयोपस्थितस्य तत्साध्यत्वाभिधायकं स्वर्गकामपदं विश्वजिद्वाक्यशेषत्वेन श्रुतार्थापत्त्या कल्प्यत इति युक्तम् । अत्र पुनरपूर्वकार्यस्यान्यतोऽनुपस्थितत्वादपूर्वत्वादर्थापत्तिप्रमाणेनैवोपस्थितिर्वक्तव्या । प्रमाणं चोपस्थापयति, अथ च न तत्र प्रमाणमिति हास्यास्पदमेव । तत्र

यद्यर्थापत्तिरपूर्वे प्रमाणम्, तत्र लिङोऽनुवादकत्वादप्रामाण्यमेव। अर्थापत्तिप्रमाणादनुपस्थितेऽपूर्वकार्ये हि लिङादिभिः सह वाच्यवाचकसम्बन्धानवधारणात्। न च शब्दसहायात्तर्कादेवापूर्वोपस्थितिरिति वाच्यम्। यतः प्रमाणोपस्थिते खल्वर्थे तद्विपरीतार्थान्तरगतानिष्टप्रसङ्गस्तर्कः। यथा "श्येनेनाभिचरन् यजेत" इति। अत्रैवावगते भावार्थस्य फलसाधनत्वे नामार्थस्यापि फलसाधनत्वे अदृष्टान्तरकल्पनाप्रसङ्गः। न चात्रान्यथानुपपत्तेः प्राक् शब्दादपूर्वस्योपस्थितिरिति सत्यप्यपूर्वकार्यत्वे सम्बन्धाग्रहरूपोऽपरो व्युत्पत्तिविरहः। तदयं संक्षेपार्थः—

प्रवर्तकत्वे कार्यस्य तथापूर्वस्वरूपके।
विधिशब्दाभिधेयत्वे व्युत्पत्तिविरहस्त्रिधा॥

दूषणान्तराणि तु विस्तरभयान्नोक्तानि। तदेतत्सर्वथाऽपूर्वकार्याभिधानं विधिशब्दस्याभिधानतो यथा यथा निरूप्यते, तथा तथा कदलीकाण्डेऽन्तस्सारविचारसमानमेवेत्यलमतिस्वप्नस्य विकत्थनेनेति यथावार्तिकमेवापूर्वप्रमाणं प्रस्तूयते।

(भाट्टमतेन सिद्धान्तः)

अर्थापत्तिरेवापूर्वे प्रमाणमिति। तथा हि—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र विध्यवरुद्धा भावना स्वर्गकाम-

पदोपनीतं पुरुषार्थीभूतं स्वर्गमेव साध्यं परिगृह्य साधनाकां-
क्षिणी यागमेव समानपदोपात्तं साधनतया गृह्णती काला-
न्तरभाविनि स्वर्गे भङ्गिनो यागस्य साधनत्वमवगतमनुपपद्यमा-
नमपूर्वरूपं यागजन्यमवान्तरव्यापारभूतं चिरस्थायि कल्पयति ।
न च वाच्यम्—सर्वत्र व्यापारविशिष्टस्यैव व्यापारिणः साधनत्वं
भवति, न तु निवृत्ते व्यापारिणि व्यापारमात्रस्येति । यतो धनु-
र्ज्याकर्षणमोक्षणस्यातिक्रान्तस्याप्यवान्तरव्यापारपरम्पराद्वारेण चि-
रेणापि लक्षवेधसाधनत्वदर्शनात् । अत एव यत्केनाप्युक्तम्—
यद्विद्यमानव्यापारिजनित एवावान्तरव्यापार इत्युत्पत्स्यपूर्वव्यहितस्य
परमापूर्वस्य नावान्तरव्यापारत्वमिति तदपि परास्तम्; येनानेक-
व्यापारपरम्परया व्यवहितस्याप्यन्तिमवेगाख्यसंस्कारजन्यस्य क्रि-
याक्षणस्य लक्षवेधोद्देशप्रवृत्तधनुर्ज्याकर्षणमोक्षणावान्तरव्यापार-
त्वदर्शनात् । किञ्चार्थापत्तेरन्यथाप्युपपत्तिरन्यथैवोपपत्तिरिति दूषण-
द्वयम् । तेनानुमानदूषणं विशेषविरोधमभिदधतोऽर्थापत्तिदूषणा-
परिज्ञानमेवात्मनः प्रकटितमिति ।

यदप्युक्तम्—कार्यकारणयोरयौगपद्यात्सर्वत्र पूर्वभाविन एव
कारणत्वम्, तेन यथानन्तरपूर्वभाविनस्तथार्थापत्त्या क्वचिच्चिरपूर्व-
भाविनोऽपि यागस्य भविष्यतीति । तदयुक्तम्; कारणत्वं हि
कार्योत्पत्तिशक्तियोगित्वम् । न चातीतस्य शक्तियोगित्वं सम्भवति ।

कथं तर्हि पूर्वभाविनः कारणत्वमिति चेत्—उच्यते ; द्वयी हि कार्यस्यावस्था—उत्पन्नावस्था, उत्पद्यमानावस्था च । तत्रोत्पन्नावस्थायां कारणस्य पूर्वभावित्वमेव । तदभिप्रायेणोच्यते अनन्तरपूर्वभाविकारणमिति । उत्पद्यमानदशायान्तु कार्योत्पत्तिशक्तियोगि कारणं विद्यत एव । सर्वत्रोत्पद्यमानदशायां कारणस्य विद्यमानत्वात् । कथं चिरातिवृत्तस्य कारणत्वमिति ? तेनैव शब्दावबोधितसाधनत्वानुपपत्त्या तदुपपादकमपूर्वं कल्प्यत इति । तदुक्तम्—

फलाय विहितं कर्म क्षणिकं चिरभाविने ।
तत्सिद्धिर्नान्यथेत्येवमपूर्वमपि कल्प्यते ॥ इति ।

(तं. वा., पृ. ३६०)

नन्वेवं भवतु क्षणिकस्य यागस्य चिरभाविफलकरणत्वान्यथानुपपत्त्या फलापूर्वमेकम् । अपूर्वान्तराणि तु कुतः ? उच्यते—"दर्शपूर्णमासाभ्यां यजेत" इत्यत्र करणतया परस्परसहिता भङ्गिनः षड्यागाः प्रतीयन्ते । तेन यथा फलकरणत्वानुपपत्त्या फलापूर्वमेकं कल्प्यम्, तथा क्षणिकानां साहित्यानुपपत्त्योत्पत्त्यपूर्वाण्यपि कल्प्यन्त एवेति नानुपपन्नम् । ते च षड्यागाः कालसम्बन्धितया समुदायद्वयापन्नाः "दर्शपूर्णमासाभ्याम्" इति करणविभक्त्या विवक्षितसाहित्याः करणतया प्रतीयन्ते । तेषां च समुदायद्वयापन्नाना-

मङ्गान्युदीच्यानि यथा प्रयाजादीनि साधारणानि, असाधारणान्यपि तथा बहूनि सन्त्येव। तद्यथा—"चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रामावास्याम्" इति चतुर्होतृपञ्चहोतृमन्त्राणामसाधारणाङ्गत्वम्, तथा "संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति" इति वैमृधस्य कर्मणः पौर्णमास्यङ्गत्वमिति। अङ्गं च तद्भवति, यत्स्वरूपे कार्ये वोपकरोति। तत्रोदीच्याङ्गानां स्वरूपोपयोगाभावात् कार्य एवोपयोगो वक्तव्यः। तेन साङ्गा पौर्णमासी एकं समुदायापूर्वं जनयति। तथैवामावास्याऽपरं समुदायापूर्वमिति। न च फलापूर्व एव कार्ये उदीच्याङ्गोपयोग इति वक्तव्यम्। असाधारणाङ्गोपदेशस्यासाधारणकार्यव्यतिरेकेऽनुपपत्तेः। अन्यथा एकफलापूर्वप्रयुक्तत्वेन प्रयाजादिवत्तेषामपि साधारणत्वप्रसङ्गात्। किं च यत्र विभिन्नसमुदायसाध्यमेकं कार्यम्, तत्र प्रत्यात्मिकसमुदायसाध्यावान्तरकार्यद्वारेणैव। यथा पदात्मकवर्णसमुदायानां पदार्थज्ञानावान्तरकार्यद्वारेण वाक्यार्थज्ञानमिति व्युत्पत्तिवशादुत्पत्त्यपूर्वाणां फलापूर्वसाधनत्वानुपपत्त्या साङ्गसमुदायद्वयजन्यमपूर्वद्वयमेव कल्प्यत इति।

---

१. "पृथिवी होता" इत्यादिको मन्त्रश्चतुर्होता। "अग्निर्होता" इत्यादिको मन्त्रः पञ्चहोता।

नन्वेवं तर्हि समुदायापूर्वद्वयमेवाव्यवहितफलसाधनमस्तु, किं परमफलापूर्वस्वीकारेण ? उच्यते—कर्त्तुरिष्टफलनिष्पादकता फलाव्यवहितैककार्यद्वारेणैव, यथा कुविन्दस्य तन्तुसंयोगनिष्पादनद्वारेण पटनिष्पादकत्वमिति व्युत्पत्त्या समुदायापूर्वद्वयस्याव्यवहितफलसाधनत्वानुपपत्त्या फलापूर्वमेकं कल्प्यत इत्यपूर्वनवकसिद्धिः । तदपूर्वनवकशाखिनि चारोपचारबालवलभीभुजङ्गः सङ्गतसोपानकं चक्रे ।

अत्र च प्रतिपदाधिकरणापूर्वाधिकरणयोर्भावार्थाधिकरणपरिकरत्वाद्भावार्थाधिकरणप्रयोजनेनैव प्रयोजनवत्त्वम् । भावार्थाधिकरणप्रयोजनश्चैवम्—यदि द्रव्यगुणयोः फलसम्बन्धस्तदा अप्रतिनिधानम्, अदृष्टकार्यत्वेन तत्सदृशस्य द्रव्यादेस्तत्कार्यत्वानवधारणात् । भावार्थस्य तु फलसाधनत्वे, द्रव्याभावे तत्सदृशद्रव्यान्तरस्य दृष्टकार्यत्वेन प्रतिनिधानमिति ।

सूत्रन्तु—अपूर्वं पुनरस्ति, यदारम्भश्चोदना । आरभ्यत इत्यारम्भः फलभावनैवोच्यते । सैव चोद्यमाना अपूर्वसद्भावे प्रमाणमित्यर्थः ॥

इति तृतीयमपूर्वाधिकरणम् ॥३॥

## अथ चतुर्थं तानिद्वैधाधिकरणम् ॥

## तानि द्वैधं गुणप्रधानभूतानि ॥ २.१.६॥

### (विषयसंशयौ)

अवगतमेतद्भावशब्दाः प्रधानकर्मणो वाचका इति । बहुप्रकाराश्च भावशब्दाः—यजति ददाति जुहोतीत्येवंप्रकाराः, अवहन्ति दोग्धि पिनष्टि विलापयतीत्येवमादयश्च । तेषु सन्देहः—किं सर्वे प्रधानकर्मणोऽभिधायकाः ? उत केचिद्गुणकर्मण इति । भावार्थेभ्योऽपूर्वमिति व्युत्पादिते सर्वेषामेवाख्यातपदानां भावार्थत्वाविशेषात्सर्वेभ्य एवापूर्वप्रसक्ताविदानीं तदपवादार्थं गुणप्रधानविवेकः क्रियते ।

### ( पूर्वपक्षः )

तत्रायं पूर्वपक्षिणोऽभिसन्धिः—यथा यजति ददाति जुहोतीत्यादिषु भावना भाव्यमपूर्वमेव धात्वर्थस्य सन्निधिवशाद् गृह्णाति प्रयोजनतया साध्यम्, तथाऽवहन्ति दोग्धि पिनष्टि विलापयतीत्यादिष्वपि भावनाभाव्यमपूर्वमेव धात्वर्थस्य प्रयोजनतया साध्यं युक्तम् । अतः सर्वेषामेव प्रधानकर्मत्वमविशेषात् । ननु "व्रीहीनवहन्ति" इत्यादिषु द्वितीयाश्रुत्या व्रीह्यादीनामेव समभिव्याहृतावघातादिक्रियापेक्षया प्राधान्यमवगम्यते । अतः कथं कर्मणः प्राधान्यमेव । मैवम्; लोकवेदयोर्द्वितीयायाः प्राधान्याभिधानव्यभिचारात् ।

तथाहि—लोके तावत् 'उपाध्यायाय गां ददाति' इत्यादिष्वनीप्सितकर्मण्यपि द्वितीया दृश्यत एव। तथा वेदेऽपि सक्तुमारुतैकक-पालादिषु, "सक्तूञ्जुहोति" "एककपालं जुहोति" इत्यादिषु द्वितीया श्रूयत एव। न च सक्त्वादीनां प्राधान्यमस्ति। अतो नात्र द्वितीया-श्रुत्या व्रीह्यादीनां प्राधान्यमवगम्यत इति। न च वाच्यम्—वैतुष्यरूपदृष्टोपकारद्वारेण सामवायिकत्वे सम्भवति यागादिवदपूर्वद्वा-रेणारादुपकारकत्वमयुक्तमिति। यतो वैतुष्यार्थत्वेनावघातविधौ सति दृष्टार्थत्वं सामवायिकत्वं च भवति, विधेश्चाप्राप्तविषयत्वात्। न च प्रमाणान्तरविषयवैतुष्योपायो विधिः सम्भवतीत्यदृष्टार्थत्वमेव। न च नियमस्याप्राप्तत्वान्नियमार्थोऽयं विधिरिति वक्तव्यम्, नियम-स्याश्रुतत्वात्। न ह्यत्र नियमाभिधायकः कश्चिच्छब्दः श्रूयते। किञ्च वैतुष्योपायत्वेनावघातस्य प्राप्तत्वादुपायान्तरनिवृत्तिरूपो नियमो वक्तव्यः। तथा च सति शब्दान्तरेण परिसंख्यैवोक्ता भवेत्। सा च त्रिदोषत्वादयुक्तेति प्रधानकर्मत्वमेव।

अथोच्यते—न वयं नियमस्य शाब्दत्वमन्यनिवृत्तिरूपत्वं वा ब्रूमः। किन्तर्हि? लोकप्राप्तस्यैवापूर्वसाधनताज्ञापनम्। तच्चास्य निवृत्तिफलत्वान्नियम इत्युच्यते। तदत्रावघातस्यापूर्वसाधनत्वम-भिमतं यद्विधिज्ञाप्यं किं प्रयाजादिवत्साक्षादेवापूर्वजनकत्वम्? अपूर्वाय वैतुष्यजनकत्वं वा? न तावत्साक्षात्; सिद्धान्तिना

तदनभ्युपगमात् । नाप्यपूर्वाय व्रीहिवैतुष्यजनकत्वम्; तस्यापि लोकत एव प्राप्तत्वात् । अथैवं सति लोकानुसारेण दलनादेरप्यपूर्वसाधनत्वप्राप्त्यै विधिरिति चेत्—नैतत्; तथा सति परिसंख्यापत्तेर्न नियमविधित्वम्। तस्मात् प्रयाजादिवदपूर्वार्थत्वमेवावघातादीनामिति। एवञ्च सति 'यदैकस्मादपूर्वं तदेतरत्तदर्थम्' इति न्यायेन व्रीह्यादिद्रव्याणामवघातार्थत्वात्सर्वेषामेवाख्यातानां प्रधानकर्माभिधायित्वम्, ततश्चापूर्वभेद एवेत्येवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेतदेवं यद्युभयमत्र द्रव्यं क्रिया च विधीयते। तदा हि द्वयोरेव प्रयोजनाकाङ्क्षायां द्रव्यस्य दृष्टक्रियानिष्पादकत्वेनैव प्रयोजनाकाङ्क्षानिवृत्तिः। कर्मणस्तु दृष्टासम्भवाददृष्टार्थत्वमेव कल्प्यत इति प्रयुक्तम् । यदा तु वाक्यान्तरप्रतिपादितप्रयोजनं द्रव्यमुपात्तं, तदा कर्मणोऽपि तदपेक्षितदृष्टोपकारनिर्वर्तनेनैव प्रयोजनत्वाभ्नादृष्टकल्पनायां प्रमाणमस्ति। इहापि "व्रीहीनवहन्ति", इत्यादौ "व्रीहिभिर्यजेत" इत्यादिवाक्यप्रतिपादितप्रयोजनमेव व्रीह्यादिद्रव्यमुपात्तम्, तथा विधीयमानस्यावघातादिकर्मणोऽपि तदपेक्षिततण्डुलादिरूपदृष्टोपकारनिर्वर्तनेनैव प्रयोजनत्वान्नादृष्टकल्पनायां प्रमाणमस्ति ।

तदुक्तम्—

नामाख्यातार्थसम्बन्धे यदक्लृप्तं प्रयोजनम् ।
तस्याद्दृष्टार्थता युक्ता, नेतरस्याप्रमाणिका ॥ इति ॥

(तं. वा., पृ. ४०६)

न चैवं सत्यवघातादेर्दृष्टवैतुष्योपायत्वस्य प्राप्तत्वान्न तदर्थतया विधेर्वैयर्थ्यमिति वक्तव्यम् । यतो व्रीहीणां तण्डुलादिनिर्वृत्तिद्वारेण यागसाधनत्वात्तण्डुलनिर्वृत्तिरूपार्थाक्षेपेणावघातप्राप्तिर्वक्तव्या । न च श्रौते विधौ सत्याक्षेपः सम्भवति । तेनाक्षेपात् प्रागेव श्रौतस्य विधेः प्राप्तविषयत्वम् । न च विनापि विधिना प्राप्स्यतः किं विधिनेति विधिवैयर्थ्यम् । अप्राप्तांशपूरणेनैवार्थवत्वात् । तथाहि—नित्यभूता खलु प्राप्तिर्विधितोऽवगम्यते, आक्षेपतश्च पाक्षिकी । अन्यस्यापि वैतुष्योपायस्याक्षेपाविशेषात् । तेन यस्मिन् पक्षे नावघातप्राप्तिस्तत्पक्षपूरणेनापूर्वोपयोगितया विधेः साफल्यमिति । अयमेव च नियमपरिसंख्ययोर्भेदः—यत्पक्षप्राप्तविषयत्वान्नियविधेरप्राप्तांशपूरणमेव फलम्, अर्थादन्यनिवृत्तिः । परिसंख्यायान्तु युगपदुभयप्राप्तेरप्राप्तांशपूरणाभावादन्यनिवृत्तिरेव विधेः फलमिति । एष च नियमविधिप्रकारो "व्रीहिभिर्यजेत" इत्यत्र द्रव्यविधावप्यूहनीयः ।

नन्वत्र किमवघातादिजन्यमदृष्टमस्ति न वा ? न तावन्नास्ति, अदृष्टमन्तरेण नियमानुपपत्तेः । अथास्ति, तदा संमार्गादिवदवघातादेरप्यदृष्टार्थत्वान्नास्त्यधिकरणभेद इति । न ह्यवघातादेरदृष्टार्थत्वे विधानमनुष्ठानं वा, किन्तु दृष्टलोलुपत्वाद्विधिः अपेक्षितव्रीहिवैतुष्यार्थमेव । तस्य चाप्राप्तांशपूरणेन यदवघातादेर्नियमानुष्ठानप्रतिपादनं तदुपपत्तये तण्डुलादिगतमदृष्टं कल्प्यमानं 'न निमित्तं विधिरपबाधत' इति न्यायेन न दृष्टार्थत्वमबाधितमधिकरोति । सम्मार्गादिषु तु विध्यपेक्षितदृष्टाभावाददृष्टार्थमेव विधानमिति भेदः ।

यत्तु द्वितीया प्राधान्यं व्यभिचरतीत्युक्तम्, तदनन्तराधिकरणे परिहरिष्यामः । इह पुनरद्वितीयान्तानामपि बहूनां "प्रयाजशेषेण हवींष्यभिघारयति" "मैत्रावरुणाय दण्डं प्रयच्छति" "अग्नेस्तृणान्यपचिनोति" "तप्ते पयसि दध्यानयति" इत्येवमादीनामप्युदाहरणत्वाद्वाक्यान्तरक्लृप्तप्रयोजनद्रव्यसम्बन्धेन दृष्टोपकारदर्शनमेव प्रमाणमिति । तदुक्तम्—

"यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्"
"यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात्"
(जै. सू., २. १. ७, ८) इति ।

अतो द्रव्यगुणत्वादेवमादीनां नापूर्वभेद इति ।

प्रयोजनम्—विकृतौ प्रैयङ्गवे चरावतिदेशप्राप्तोऽवघातो व्रीहिद्रव्य एव कर्तव्यः, प्रधानश्रुतद्रव्याङ्गद्रव्यस्याबाधकत्वात् । अतिदिष्टप्रयाजाज्यवदिति पूर्वः पक्षः । तदुक्तम्—

प्रधाने हि श्रुतं द्रव्यं नाङ्गद्रव्यस्य बाधकम् ।
प्रयाजेष्वाज्यवत्तेन हन्तौ स्याद्व्रीह्यबाधनम् ॥ इति ।

(तं. वा., पृ. ४०७)

सिद्धान्ते तु—प्रियङ्गूणामेव कार्यान्तरोपयुक्तत्वेन संस्कार्यत्वात्तासामेवावघात इति । तदुक्तम्—

प्रधानौपयिकं द्रव्यं संस्कारैरपि युज्यते ।
तेन हन्त्यादिभिः सर्वैः संस्कर्तव्याः प्रियङ्गवः ॥ इति ।

(तं. वा., पृ. ४०७)

तथा प्रकृतावपि प्रयोजनानि—अदृष्टार्थत्वे सति सर्वौपधिकं कृष्णलावघातवत् सकृदेवावघातः कर्तव्यः । एवं यवप्रयोगेऽपि अवघातार्थं व्रीहय एवोत्पादयितव्याः । तथा प्रधानद्रव्यवैतुष्यं चोपायान्तरेणापि कर्तव्यं यदि पूर्वःपक्षः । सिद्धान्ते तु तण्डुलनिर्वृत्तिपर्यन्तमवघातोऽभ्यसितव्यः । यवप्रयोगे तु यवा एवावहन्तव्याः । प्रकृतद्रव्यवैतुष्यश्च नोपायान्तरेण कर्तव्यमिति ।

सूत्रन्तु—आख्यातानि द्वैधं द्विप्रकारं विधायकानि कानिचिद्गुणकर्मणः, कानिचित्प्रधानकर्मण इति ।

यत्तु केनापि गुरुमतमजानता तन्मतमसम्यगुपन्यस्य दूषितम्, तदुपहासास्पदम् । तथाहि—स खल्वेवमाह—अन्यनिष्ठो हि भावार्थो न विधिविषयो नापूर्वविषय इत्यर्थः । अन्यनिष्ठत्वं च भावार्थस्यावगतापूर्वसाधनद्रव्यप्रयोजनत्वम् । तथावघातप्रोक्षणादिषु विद्यत इति तेषामपूर्वविषयत्वाभावाद् गुणकर्मत्वमेव । अनन्यनिष्ठस्तु भावार्थोऽपूर्वविषय एव । अनन्यनिष्ठत्वं च भावार्थस्यावगतापूर्वसाधनद्रव्यप्रयोजनत्वमेव । तच्च प्रयाजानुयाजादिषु विद्यत इति तेषां प्रधानकर्मत्वमेवेति । न चैवम्भूते प्रधानकर्मत्वे सुवर्णभरणादानाध्ययनादीनि व्यभिचारस्थानानि भवन्ति सर्वेषामेवानारभ्याधीतत्वेनापूर्वसाधनद्रव्यप्रयोजनत्वानवगमात् । नापि "यस्य पर्णमयी जुहूर्भवति" इतिवदपूर्वसम्बन्धिद्रव्यप्रयोजनत्वावगतिः सुवर्णादीनां व्यभिचरितक्रतुसम्बन्धित्वादपूर्वोपायत्वानुपस्थितेर्द्वितीयाद्यनीप्सितकर्मण्यपि नानुपपन्ना । एवञ्च सत्यवघातादिष्वन्यनिष्ठत्वेन भावार्थस्यापूर्वविषयत्वासम्भवाद्विषयस्य च पूर्वविशेषावगतिहेतुत्वाद्विधिशब्देनापूर्वं प्रतीयमानं कृतमेवानूद्यत इति युक्तम् । प्रयाजादिषु तु अपूर्वसाधनद्रव्यप्रयोजनत्वानवगमे विषयभावस्योक्तत्वाद्युक्ता प्रयाजादिविषयापूर्वान्तरावगतिरिति । न चैवं सत्यवघातादीनामपूर्वाविषयत्वादविधेयत्वमिति वाच्यम् । न ह्यपूर्वविषयत्वं विधेयत्वम्, किन्तु अपूर्वसिद्ध्यर्थमुपादीयमानत्वम् ।

तच्चावघातादिष्वप्यविशिष्टमेवेति । यदा यत्तत्सिद्ध्यर्थमुपादीयते तद्विधेयमिति तन्त्रे व्यवहार इति सर्वञ्चैतदवहितमतिभिस्तत्त्वतो निरूप्यमाणमस्मन्मताभिन्नमेवापूर्वाभिधानाभिधेययोः परं विशेषः। अपूर्वाभिधानं चापूर्वाधिकरण एव निराकृतम् । अलमतिपरपक्षप्रतिक्षेपमात्रपरतयेति ॥

इति चतुर्थं तानिद्वैधाधिकरणम् ॥ ४ ॥

अथ पञ्चमं सम्मार्गाधिकरणम्

(विषयसंशयौ)

धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥

॥ २. १. ६. ॥

"स्रुचः सम्मार्ष्टि" "परिधीन् सम्मार्ष्टि" "अग्नीन् सम्मार्ष्टि" "पुरोडाशं पर्यग्निकरोति" इति श्रूयते । तत्र सन्देहः—किं पर्यग्निकरणं सम्मार्जनञ्च प्रधानकर्म, उत गुणकर्मेति । पूर्वाधिकरणे "तानि द्वैधम्" इत्यभिधाय प्रधानकर्मगुणकर्मलक्षणं

सूत्रद्वयेनोक्तम् । इदानीं क्वचिद्विषयविशेषे सम्मार्गादौ प्रधानकर्मापवादः क्रियते ।

(पूर्वपक्षः)

तत्रायं पूर्वपक्षिणोऽभिसन्धिः—'यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्' इति प्रधानकर्मलक्षणमुक्तम् । न च स्रुगादिषु सम्मार्गादिजन्यचिकीर्षितो विध्यपेक्षितः कश्चिदुपकारो दृश्यते । अतो 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः' तथा 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति न्यायेन स्रुगादिद्रव्याणामेव सम्मार्गादिरूपकर्मार्थत्वात् प्रयाजादिवत् प्रधानकर्मत्वमेवेति ।

ननु मा नामावहन्त्यादिवत्प्रमाणान्तरेण द्रव्यगतं चिकीर्षितमवगम्यताम्, तथापि द्वितीयाश्रुतिरेवेप्सिततमार्थाभिधायिनी स्रुगादिगतमदृष्टं चिकीर्षितमवगमयिष्यतीति । मैवम्; स्यादेवं यदि द्वितीया ईप्सिततमत्ववाचिनी भवेत् । सा तु "सक्तूञ्जुहोति" इत्यादिषु व्यभिचरतीति पूर्वाधिकरण एवोक्तम्, तथापि स्मरणमपीप्सितानीप्सितसाधारणम्। तथा हि 'कर्तुरीप्सिततमं कर्म' (पा. सू., १.४.४९) इति स्मर्यते 'तथायुक्तं चानीप्सितम्' (पा. सू., १.४.५०) इत्यपि । तेन क्रियाजन्यत्वमेव सर्वत्राव्यभिचारात् द्वितीयार्थः । तत्प्रधान-

कर्मत्वेऽप्यविरुद्धमेव । ननु वाक्यान्तरक्लृप्तप्रयोजनमत्र स्रुगादि-द्रव्यम्, अक्लृप्तप्रयोजनश्च सम्मार्गादि कर्म । क्लृप्तप्रयोजनयोश्च सम्बन्धः, क्लृप्तप्रयोजनार्थत्वेनैवाक्लृप्तप्रयोजनं विधीयत इति युक्तम् । 'अपेक्षितविधेरनपेक्षितविधानं दुर्बलम्' इति न्यायेन दृष्टोपकाराभावेऽपि द्वितीयाया ईप्सिततमाभिधानमप्युक्तन्यायादेव क्लृप्तप्रयोजनस्रुगादिद्रव्यार्थत्वात् सम्मार्गादीनां ( न ? ) गुणकर्मत्वं सम्भवतीति । उच्यते—स्यादेवं यद्यक्लृप्ताधिकरणं विधि-रनुमन्यते । स हि स्वरसतः साध्यस्य साधनमितिकर्तव्यता-श्चाकांक्षत्तदुपायभूतं द्रव्यादिकमपि आकांक्षति, तेन विना तद-सिद्धेः । यत्तु द्रव्यगतं संस्कारादिकं दृष्टार्थद्रव्याकांक्षया सम्बध्य-मानं तदप्याकांक्षोत्थापनेनानुमन्यते । न च "स्रुचः संमार्ष्टि" इत्या-दिषु स्रुगादीनां व्रीहीणामिव दृष्टोपकारार्थमवघातादिषु सम्मार्गा-दिष्वप्यपेक्षा समस्ति । न च द्वितीयाश्रुतिबलेनैव स्रुगादीनां संमा-र्गादिष्वाकांक्षोत्थापनेनाकांक्षया चाधिकारविधेरप्याकांक्षोत्थापने-नानुमतिरिति वक्तव्यम् । द्वितीयाश्रुतेरीप्सितानीप्सितसाधारणत्वेन सम्मार्गस्य संस्कारकर्मत्वे प्रमाणाभावस्योक्तत्वात् । अतः सर्वथा सम्मार्गादीनां स्रुगादिपदार्थत्वे प्रमाणाभावात् द्रव्यचिकीर्षाभावेन धर्ममात्रमेवञ्जातीयकं (सं) मार्गादि प्रयाजादिवत् प्रधानकर्मत्वेनैव विधीयत इत्येवंप्राप्तेऽभिधीयते—

तुल्यश्रुतित्वाद्वेतरैः सधर्म स्यात् ॥ २. १. १०. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्यत्र द्वितीयाश्रुतिसमभिव्याहृत-सम्मार्गादिक्रियापेक्षं स्रुगादि प्राधान्यं नाभिदध्यात् । सा हि 'कर्तु-रीप्सिततमं कर्म' इत्यनुशासनादोदनं पचति, कटं करोति इत्यादि-प्रयोगदर्शनाच्चेप्सिततमत्वलक्षणं स्रुगादीनां प्राधान्यमेवाभिधत्ते । तथा च सति विधेः सामान्येनाप्रतिपन्नशेषभावादीनां सम्मार्गादीनां स्रुगादिसमभिव्याहृतानां स्रुगादिगतमेव शेषित्वं बोधयतीति गुणक-र्मत्वे द्वितीयाश्रुतिरेव प्रमाणमिति । ननु "सक्तूञ्जुहोति" इत्यादिषु द्वितीयेप्सिततमत्वलक्षणं प्राधान्यं व्यभिचरतीत्युक्तम् । मैवम्; तत्रापीप्सिततमत्वरूपप्राधान्याव्यभिचारात् । यत्तु करणत्वरूपं गुणत्वं, तल्लाक्षणिकमेव । तदुक्तम्—

प्राधान्यमेव तत्रापि द्वितीया वदति स्वतः ।
विरोधात्तेन सम्बन्धो गुणभावस्तु लक्ष्यते ॥ इति ।

(तं. वा., पृ. ४१०)

ननु मुख्याऽनभिधाने लक्षणा भवति । तदुक्तम्—

अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते ॥ इति ।

(तं. वा., पृ. ३५४)

कथं पुनः सक्तुप्राधान्यं विरुद्धयते, येन विरोधाद्गुणभावो लक्षणीयः। उच्यते-यस्य क्वचिदुपयोगो निर्वृत्तो भविष्यतीति वावधार्यते तत्संस्कारार्थत्वात् कर्मप्राधान्यं प्रतिपद्यते। न च सक्तूनां भूतभाव्युपयोगः। तदुक्तम्—

भूतभाव्युपयोगं हि संस्कार्यं द्रव्यमिष्यते।
सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित्॥ इति।

(तं. वा., पृ. ४११)

अतो गुणभावलक्षणया सक्तुसाधनकहोमविधानमेवैतदिति सिद्धम्। सा च लक्षणा मुख्यार्थतात्पर्यानुपपत्त्या भवति। इह मुख्यार्थपरत्वस्यैवासम्भवाल्लक्षणेति। तेनेप्सिततमत्वरूपप्राधान्याभिधायिद्वितीयाबलेन गुणकर्मत्वमेव सम्मार्गादीनामिति।

ननु कर्मणि द्वितीया स्मर्यते। कर्मत्वन्तु यथेप्सिततमस्य, तथानीप्सितस्याप्यविशिष्टम्, 'तथा युक्तञ्चानीप्सितम्' (पा.सू., १.४.५०) इत्याद्यनुशासनाविशेषात्। अतः कथमीप्सिततमत्वमेव द्वितीया इति। उच्यते—न ह्यलौकिकं कर्मत्वरूपमत्र पाणिनिनाभिहितम्, किन्तु क्रियत इति व्युत्पत्त्या मनिप्रत्ययतोऽयं कर्मशब्दः। चेतनेन च तदेव क्रियते यदीप्सिततमम्, इच्छापूर्वकत्वात् क्रियायाः। अतस्तदेव मुख्यं कर्म। तेनोक्तं 'कर्तुरीप्सिततमं कर्म' इति। अन्येषां त्वनीप्सितादीनां क्रियाव्याप्यत्वमात्रपरोऽयं कर्मशब्दो

द्वितीयाप्रयोगार्थमेव पाणिनिना प्रयुक्त इति विवेक्तव्यम्। अतः सिद्धं सम्मार्गादीनां गुणकर्मत्वमिति।

यत्तु प्रभाकरेणेप्सितानीप्सितसाधारणं क्रियाजन्यफलभागित्वमेव कर्मत्वं तदेव च द्वितीयार्थ इत्युक्तम्। तत्रापादानस्यापि विभागलक्षणस्य क्रियाजन्यफलभागित्वेन कर्मत्वप्रसङ्गः। अथ मतं चतुर्विधं हि कर्म—उत्पाद्यं, प्राप्यं, विकार्यं, संस्कार्यञ्चेति। अतो नान्यत्कर्मत्वं किन्तूत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपफलचतुष्टयभागित्वमेव। तदयुक्तम्—गां दोग्धि गोपालक इत्यत्रोक्तोत्पत्त्याद्यन्यतमफलभागित्वाभावाद्गोरकर्मत्वप्रसङ्गात्। तस्याश्च कर्मत्वम् 'अकथितञ्च' (पा. सू., १. ४. ५१) इत्यनेन सूत्रेण सूत्रितम्। अथ दोहे दुग्धयुक्तावस्थाभावेन दुग्धवियुक्तावस्थापत्त्या विकारकर्मत्वमेव गोरित्युच्यते, तर्हि 'नगराद्ग्रामं राजा गच्छति' इत्यत्राऽपि राजवियुक्तावस्थापत्त्या नगरस्यापि कर्मत्वादपादानत्वं न स्यादिति यत्किञ्चिदेतत्।

अत्र सम्मार्गस्य प्रधानकर्मत्वे गुणकर्मत्वे चानुष्ठानाविशेषात् प्रकृतौ विचारप्रयोजनस्यादर्शनात् भाष्यकारेण विकृतौ वरुणप्रघासे प्रयोजनमुक्तम्। तत्र "शमीमय्यः स्रुचो भवन्ति" इति विधीयमाना शमी प्रकरणेन प्रधानीभूतवरुणप्रघासार्था। तद्यदि

प्रधानकर्मत्वं संमार्गस्य तदा तदर्थं प्रकृतिवन्नानावृत्तीया एव स्रुच उत्पादयितव्याः, प्रधानाङ्गानामङ्गद्रव्याबाधकत्वात् । गुणकर्मत्वे तु प्रधानगृहीतानां शमीमयीनामेव कार्योपयोगात्तासामेव सम्मार्ग इति ।

तदेतद्वार्तिककारपादा नानुमन्यन्ते । अयश्च तेषामभिसन्धिः—यथा "बर्हिषि हवींष्यासादयति" इति प्रकृतौ प्रकरणेन प्रधानसम्बन्धिना साङ्गप्रधानहविरासादनार्थं, तथात्रापि स्रुङ्मात्रानुवादेन विधीयमाना शमी पूर्वपक्षेऽप्यङ्गप्रधानार्थैवेति । तदुक्तम्—

स्रुङ्मात्रमनुवादेन शमीमय्यादि चोदितम् ।
ज्ञायतेऽङ्गप्रधानार्थं पूर्वसिद्धान्तपक्षयोः ॥ इति ।

(तं. वा., पृ. ४१३ )

अथ प्रकृतावयं न्यायः, विकृतौ तु प्रधानमात्रसङ्गतिरेवाङ्गानाम् । तदा प्रयाजादिस्रुचामपि प्राकृतनानाजात्युत्पादनप्रसङ्गः । तदुक्तम्—

यदि प्रधानमात्रेण शमीमय्यादिसङ्गतिः ।
प्राकृत्यस्तु प्रसज्यन्ते प्रयाजादेः स्रुचस्ततः ॥ इति ।

(तं. वा., पृ. ४१४)

किञ्च—यदि प्रधानस्रुङ्मात्रसम्बन्धोऽपि शम्या भवेत्तथापि यथा सौमिकी त्रिंशद्धस्तपरिमाणा महावेदिरतिदेशप्राप्तदीक्षणीयादिसम्बद्धदार्शपौर्णमासिकचतुर्हस्तं वेदिकार्यं परिमाणानादरेण

प्रसङ्गेन साधयति, तथा प्रधानार्थोपात्तशमीमयस्रुग्भिरेव जातिमनाहृत्यातिदेशिकनानावृक्षीयस्रुक्कार्यसिद्धेर्न तदर्थं नानावृक्षीयस्रुगुपादानमिति ।

अत्रैके समाधानमेवमभिदधति—सर्वत्र खल्वङ्गानां करणोपकारसम्बन्धद्वारकार्येऽङ्गविधानं सम्भवति, तच्चपूर्वीयनिरूढकार्यत्वात्सन्निहितपदार्थाश्रयत्वेनैवाङ्गविधिर्व्यवतिष्ठते । विकृतौ तु प्रकृतिक्लृप्तकरणोपकारसम्बन्धद्वारकार्यस्यातिदेशप्राप्तत्वात्, इतरथा प्रकृतिवद्विकृतावपि तस्याकल्पनीयत्वप्रसङ्गात् तस्मिन्नेव विधिरिति स्थितम् । तदेवं सति "शमीमय्यः स्रुचो भवन्ति" इति विधीयमाना शमी प्रकरणेन प्रधानार्था सती प्रकृतिक्लृप्तप्रधानीयकरणोपकारसम्बन्धद्वारकार्यमेव स्रुक्छब्दोपस्थापितमपेक्ष्यमाणा प्रकृतिप्राप्तपर्णतादिनानाजातीयस्रुङ्निराकांक्षसंमार्गरूपं स्रुक्कार्यं परित्यज्य तत्रैव विधीयत इति युक्तम् । न च सम्मार्गस्रुचावपि प्रकृतौ प्रधानीयकरणोपकारकत्वं दीक्षणीयावाग्यमवत् स्रुचः संमार्ष्टीत्यनन्यगतिवाक्योपादानबलेन संमार्गापूर्वगृहीतत्वेन प्रधानापूर्वेण गृहीतत्वात् । अतो न तत्कार्ये शमीविधिरिति । तदर्थं नानाजात्युत्पादनमेव । बर्हिषां तु प्रकरणेन प्रधानापूर्वगृहीतत्वेऽप्यङ्गहविरहासादनस्य चाङ्गापूर्वगृहीतत्वेन प्राकृतानां करणोपकारकार्ये विधानासम्भवाद् द्वयोरप्यङ्गप्रधानहविरासादनयोराश्रयसाकांक्षत्वात् वाक्यात्प्रकरणबाधेन युक्तमुपकारकतामा-

त्रपुरस्कारेणोभयार्थत्वम् । न च "वेद्यां बर्हिषि हवींष्यासादयति" इत्याश्रयनैराकांक्ष्ये सति प्रकरणात्प्रधानहविरासादनसम्बन्ध एव बर्हिषां नाङ्गहविरासादनसम्बन्ध इति वक्तव्यम् । द्वयोरेकवाक्योपात्तयोर्वेदिबर्हिषोर्युगपदङ्गप्रधानहविरासादनाश्रयत्वादविरोधेन समुच्चयेन समन्वयात् । विकृतौ तु प्राकृताङ्गसम्बन्धोत्तरकालीनत्वात् वैकृताङ्गसम्बन्धस्य नैराकांक्ष्यमिति वैषम्यम् । न चात्रापि वैकृतप्रधानापूर्वगृहीतत्वेऽपि शम्या उपकारकतामात्रपुरस्कारेणोभयार्थत्वमिति वक्तव्यम् । वैकृतप्रकृतिकॢप्तप्रधानीयकरणोपकारसम्बन्धद्वारकार्याश्रयत्वस्य व्यवस्थितत्वात्सम्मार्गस्य प्रकृतिकॢप्तप्रधानीयकरणोपकारसम्बन्धिस्रुग्द्वारकार्यत्वासम्भवस्योक्तत्वाद्दीक्षणीयावत्प्रधानापूर्वगृहीतत्वात्सम्मार्गस्रुचाम् ।

किञ्च वैकृतो हि शमीविधिरतिदेशप्राप्तपर्णतामबाधमानो निविशते, तत्र प्रकरणानुरोधेन प्रधानीयस्रुक्प्रकृतिद्रव्यबाधेनैवोपपत्तौ नाङ्गस्रुक्प्रकृतिद्रव्यबाधनमप्युचितम् । न हि सौमिकमहावेद्युपदेशेन दीक्षणीयादिष्वातिदेशिकदार्शपौर्णमासिकवेदिबाधः परेणापि स्वीकर्तव्यः । तथा सति वेदिप्रसङ्गदूषणानवकाशात् । अत एव "षड्भिर्दीक्षयति" इत्यत्राप्यबाधसम्भवे सति नातिदेशिकमन्त्रः षड्बाधकः । प्रकृतौ तु बर्हिषामङ्गप्रधानहविरासादनसम्ब-

न्धेऽपि न कस्यचिद्बाध इति। अतो न बर्हिषा साम्यम्। एवं सति स्रुग्रूपस्य नानाजातिकार्यस्य प्रकृतौ दर्शनाद्यदि स्रुग्रूपपर्णताकार्येऽपि शम्या विधिः, तथापि सम्मार्गस्रुचां न शमीमयीत्वम्। यतोऽनारभ्याधीतायाः पर्णतायाः स्रुग्द्वारेणाङ्गप्रधानापूर्वगृहीतायाः पृथगेवाप्रधानापूर्वीयकरणोपकारसम्बन्धिस्रुग्रूपद्वारकार्यकल्पनान्न प्रधानीयकरणोपकारसम्बन्धिद्वारकार्यत्वम्, सम्मार्गीयस्रुग्रूपं पर्णताकार्यस्यापीति।

किञ्च विधेरौत्सर्गिकाव्यवहितभावार्थविषयत्वात्पर्णतां लक्षयित्वा तत्कार्यत्वेन स्वात्मनि लक्ष्यमाणे लक्षितलक्षणाप्रसङ्गाच्च स्रुकार्ये विधिरित्युच्यते। यद्यपि पर्णताकार्येऽपि विधिः, तथापि सम्मार्गस्रुग्वर्जनमेवेति न दोषः। तदुक्तम्—'यत्र ह्यङ्गप्रधानार्थ एक एवोपदेशविधिः कार्यविधिरपि तत्र तथैव। यत्र पुनरुपदेशविधिभेदः कार्यविधिरपि तत्र प्रकरणात्प्रधानस्यैवेति दर्शितम्—आनर्थक्यात्तदङ्गेष्विति'। अस्यार्थः—उपदेशविधिरिति ग्राहकोपदेशविधिः। स यत्राङ्गे च प्रधाने च यः सम्बन्धी पदार्थः, तस्मा एक एव ग्राहको भवति। विकृतावपि तत्र प्रकृतिकृप्तकरणोपकारसम्बन्धद्वारकार्ये विधिरङ्गप्रधानसाधारण एवेति। यथा प्रकृतौ दर्शपूर्णमासीयग्राहकाधिकारविधिगृहीतानां बर्हिषां कार्ये विकृतौ शरविधिः। अत एव प्रयाजादिषु स्रुचामपि शमीमयीत्वम्, तासामपि बर्हिर्वदेकैक-

ग्राहकापूर्वगृहीतानामुपकारकतापुरस्कारेणाङ्गप्रधानहोमरूपद्वारकार्यसम्बन्धाविशेषात् । यत्र पुनरुपदेशविधिभेद इति, ग्राहकापूर्वभेदः । यथा "जुह्वा जुहोति" "स्रुचः सम्मार्ष्टि" इति, विकृतावपि तत्र सम्मार्गविधिः प्रकरणात्प्रधानस्यैव सम्मार्गस्रुचां सम्मार्गापूर्वगृहीतत्वेन प्रधानग्राहकाधिकारविधिसम्बन्धाभावात् ।

ये तु यत्र ह्यङ्गप्रधानार्थ एक उपदेशविधिरित्यङ्गप्रधानसाधारण एव विनियोगविध्यभिप्रायेण प्रचक्षते, तेषां प्रकृतौ पृथगाध्वर्यवचमसाख्यया ऋत्विक्समाख्यया च पृथगङ्गप्रधानसम्बन्धिन्यध्वर्युकार्ये ऋत्विक्कार्ये च "यो होता सोऽध्वर्युः" "ये यजमानास्त ऋत्विजः" इति विकृतौ न होतृयजमानसम्बन्धो भवेत् । ग्राहकोपदेशविधिगृहीतानां विकृतौ करणोपकारसम्बन्धिद्वारकार्यगवेषणे विभिन्नसमाख्याकल्पितानामपि नानाकार्याणां प्रधानगृहीताध्वर्युसम्बन्धेन प्रधानीयकरणोपकारकद्वारकार्यकल्पनमुचितमेव । नापि सौमिकवेदिदक्षिणान्यायेन, प्रसङ्गादेव प्रधानीयस्रुचां सम्मार्गसिद्धेर्न तदर्थं नानावृत्तीयस्रुगुपादानम् । प्रयोगप्राशुभावार्थे हि प्रयोगविधिः गुणानादरेणाप्यन्यार्थानुष्ठितस्याप्यन्योपकारकत्वमनुमन्यते । तेन यस्यैव प्रयोगविध्याक्षिप्तं प्रयोगान्तःपतितमुपादानम्, तस्यैवोपादानप्रसङ्गविषयत्वम्, "सौमिकवेदिदक्षिणा" इत्यादि "सौमिकवेदि-

दक्षिणयोः" इत्यन्तो ग्रन्थो (नालिखियो ?) श्चैवंरूपत्वाद्भवतु प्रसङ्गेनोपकारत्वम्। स्रुचाश्च द्रव्यार्जनवत्प्रयोगाद्बहिरेव क्रतुविध्यर्थमुपादानाच्च प्रसङ्गन्यायविषयत्वमिति। किञ्च सन्त्येवाग्निहोत्रार्था द्विजातेरग्निहोत्रिणो नित्यं हि नानावृत्तीया प्रसङ्गा.........इति(?)। न च यजमानगृहावस्थितत्वात्तासां यज्ञदेशासम्भवाच्छमीमयीनां प्रसङ्ग एवेति वक्तव्यम्, केनाप्यागन्तुककारणेन यज्ञदेशानयने सति प्रयोजनसम्भवात्। अतस्सूक्तं भाष्यकारेण स्रुगुदाहरणप्रयोजनमिति।

अत्रोच्यते—योऽयं स्रुक्छब्दोपलक्षितकार्यद्वारेणोपकारसम्बन्धिद्वारकार्याश्रयो विधिः, स किं प्रकृत्यवधारितविधिस्वरूपानुरोधेन ? कल्पनाभयेन वा ? तत्र न तावदाद्यः कल्पः—प्राकृताङ्गविधेरपूर्वीयपदार्थाश्रयत्वस्वीकारात्। अथाङ्गानां प्रकृतावेव करणोपकारसम्बन्धिद्वारकार्यजनकत्वात्तत्रैव विधिरुचित इत्यवधारितम्। किन्तु प्रकृतौ प्रथमं करणोपकारस्याक्लृप्तत्वाद्विधेरपूर्वीयपदार्थमात्राश्रयत्वम्, विकृतौ प्रकृतिक्लृप्तस्योपकारद्वारकार्यस्यातिदेशप्राप्तेस्तत्रैव विधिरिति। मैवम्; चेतनप्रवर्तनात्मको हि विधिः। चेतनप्रवृत्तिश्च सर्वत्र पुरुषार्थसम्बन्धविषयिणी। तदयं विधिः प्रवर्त्यपुरुषं प्रति प्रवृत्तिविषयस्य पुरुषार्थसम्बन्धज्ञानमव्यवहितमेवापेक्षते। ननु परम्परासम्बन्धात्, नः अपूर्वीयकरणोपकारसम्बन्धिद्वारकार्यजन-

कत्वेऽप्यङ्गानां तद्द्वारेण परम्परापूर्वसम्बन्धात् तत्परित्यज्य सर्वत्र पुरुषार्थीभूताधिकारापूर्वीयशब्दमात्रमपेक्षमाणो विधिरपूर्वीयपदार्थविषय एवोचितः, द्वारकार्यस्य तु तन्निर्वाहकत्वम्। अतो नोचित एवायमौचित्यभ्रमो मन्दानामिति।

नापि द्वितीयः—समभिव्याहारानुपपत्त्या हि लक्षणा भवति, यथा 'गङ्गायां घोषो वसति' इति। न चात्र स्रुक्पदार्थस्य शमीमयत्वसमभिव्याहारो नोपपद्यते। समभिव्याहृतपदार्थावगतविशिष्टार्थानुपपत्त्या तु यत् कल्पनीयं तल्लाक्षणिकम्। यथा 'पीनो दिवा न भुङ्क्ते' इत्यत्र रात्रिभोजनम्। कल्पनाभयेन तु लक्षणायां तस्यापि लाक्षणिकत्वप्रसङ्गः। तेनापूर्वीयशमीसमभिव्याहारानुपपत्त्या प्रकृतिवदेव स्रुचामप्यपूर्वीयत्वं लक्ष्यताम्, तदतिरिक्तन्तु करणोपकारादिकमत्रापि कल्पनीयमेवेति। किञ्च स्रुक्कार्ये शमीविधौ पदश्रुतेरप्यानर्थक्यं (?) तद्विकारबाहुल्ययोरसम्भवात्।

अथैतद्दोषपरिहारार्थमेवमभिधीयते—यत्तु प्रकृतिक्लृप्तकरणोपकारसम्बन्धिद्वारकार्यसाधनस्रुक्पदार्थप्रधानप्रकृतित्वेनैव शमी विधीयत इति, तेन करणोपकारसम्बन्धिद्वारकार्यपुरस्कारेण स्रुचां शमीविधिरित्युच्यते। ननु स्रुगर्थपरित्यागेन निकृष्ट एव कार्यविधिरिति। एवं तर्हि सुतरामेव न कार्यलक्षणा। यतः समभिव्याहारानुपपत्त्या

हि लक्षणा भवति । न च शमीसमभिव्याहारः स्रुक्पदार्थस्य करणोपकारसम्बन्धिद्वारकार्यलक्षणामन्तरेण नोपपद्यते । अपूर्वीयत्वमात्रलक्षणयैव प्रकृतिविकाराभावस्योपपन्नत्वादेव ह्युद्देश्यगतविशेषणान्तरगतविवक्षा, तदा वाक्यभेदप्रसङ्गः स्यात् । अतो न कथञ्चिदपि लक्षितकार्याश्रये विधिः, किन्तु यथाप्रकृति विकृतावप्यपूर्वीयपदार्थाश्रय एवाङ्गविधिः । तथा च सति वाक्यप्रकरणसामञ्जस्यानुरोधेन बर्हिर्वदङ्गप्रधानार्थत्वेन शम्यादिविधिरिति बर्हिर्मुदार्थः । भवतु वा प्रकृतिक्लृप्तकरणोपकारसम्बन्धिद्वारकार्याश्रयो वैकृतांशो विधिः, तथापि होमाभिनिर्वृत्तिसंमार्गरूपकार्यद्वयस्यापि प्रात्यात्मिककरणोपकारसम्बन्धिद्वारकार्यत्वेन प्रकृतिक्लृप्तत्वात् स्रुक्कार्यमात्रस्यैव द्वारकार्यत्वमिति न सम्मार्गस्रुग्वर्जनम् । न चैकरूप्यमेव परद्वारकार्यविधेः, अङ्गप्रधानगतनानाविधर्त्विगादिकार्येषु यजमानादिविध्यभावप्रसङ्गात् । न च भिन्नापूर्वगृहीतत्वान्नैकविधिविषयत्वमिति वाच्यम् । यतः प्रकृत्यनवगतस्वरूपपर्यालोचनेन हि विकृतौ कार्याश्रयत्वस्वीकारः । तत्र च यथा व्रीह्यादिपदार्थानुवादेन विहितानामवघातादीनां करणोपकारसम्बन्धिद्वारकार्यनिष्पादनेन प्रकृतावपूर्वीयत्वनिर्वाहावगमाद्विकृतावपि तस्मिन्नेव कार्येऽङ्गविधिः, तथाङ्गप्रधानस्य धारणहविरासादनादिपदार्थानुवादेन विहितानां बर्हिराद्यङ्गानामङ्गप्रधानहविषां भिन्नापूर्वगृहीतत्वेन तथात्विप्तसाधन-

स्यापि भिन्नापूर्वगृहीतत्वे सत्यपि वाक्यप्रकरणानुरोधार्थमपूर्वोपकारकतासाधर्म्येणाङ्गप्रधानसाधारणहविरासादनमात्रस्यैव बर्हिषामपूर्वीयनिर्वाहाय करणोपकारसम्बन्धिद्वारकार्यत्वस्वीकारात् विकृतावप्यङ्गप्रधानसाधारणस्रुक्त्वानुवादेन विधीयमाना शमी सम्मार्गस्रचा अङ्गापूर्वगृहीतत्वेऽप्यपूर्वोपकारकतासाधर्म्येण स्रुक्कार्यमात्रमङ्गप्रधानसाधारणं स्रुक्छब्दलक्षितं करणोपकारसम्बन्धिद्वारकार्यमाश्रयिष्यति । न च प्रकृतावङ्गहविषां नाङ्गापूर्वगृहीतत्वं "चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तद्गृह्णाति" इत्यादिवाक्यैश्चतुर्गृहीतजौहवाज्यस्य दीक्षणीयात्वाङ्नियमन्यायेन केवलप्रयाजार्थप्रतिपादकत्वात्तद्बलेन प्रयाजापूर्वेणैव गृहीतत्वात् ।

एतदुक्तं भवति—प्रकृतावेवाङ्गविधेः कार्यद्वयपर्यन्तत्वमवगतं, यत्र साधारणानुवादेनाङ्गविधिः, तत्र साधारणमेव द्वारकार्यम् । अङ्गप्रधानसाधारणानुवादेन पुनर्यत्राङ्गविधिः, तत्रोपकारकतासाधर्म्येण साधारणमेव द्वारकार्यमिति लक्षितकार्याश्रयत्वेऽपि बर्हिर्मुद्रार्थः । अथोच्यते—अङ्गप्रधानसाधारणे हविरासादनसम्बन्धे बर्हिषां न साधारणानुवादमात्रप्रयोजनम्, किं तर्हि ? अङ्गाकांक्षापि । न चात्र सा समस्ति, प्राकृतजातिनिराकांक्षत्वादित्युक्तमेवेति । तदयुक्तम्; अङ्गहविरासादनस्यापि लोकानुसारेणैव हविराश्रयार्हवत् किञ्चित्सन्निहितद्रव्यनिराकांक्षत्वेनासम्बन्धप्रसङ्गात् । अथ लोकप्रा-

प्तितो वैदिकप्राप्तेर्बलवत्त्वात्तद्बाधेनैव बर्हिः सम्बद्ध्यते, तत्किमिदानीमातिदेशिकप्राप्तेरौपदेशिकप्राप्तिर्न बलवती, यत औपदेशिकेन न बाध्येत ।

अथ लौकिकप्राप्तिरनियताधारद्रव्यविषयत्वेन सन्दिग्धरूपत्वाभ्राङ्गहविरासादनस्य नैराकाङ्क्ष्यम् । अतिदेशप्राप्तेस्तु नियतपर्णतादिविषयत्वात्सत्यपि दौर्बल्ये नैराकाङ्क्ष्यमेव सम्मार्गस्येति । तन्न; अतिदेशप्राप्तेर्निरन्तरमौपदेशिकबाधदर्शनात् । यावदुपदेशो योग्यानुपलम्भो न भवति, तावत्सन्दिग्धत्वात्तस्याश्चावस्थायां बलवदसन्दिग्धप्रमाणेन बाध एवेति नास्तिबर्हिर्मुद्रानिरस्तरणम् । किञ्च यथाङ्गप्रधानसाधारणानुवादेनापि विधीयमानस्य प्रकृतिलब्धसाधननिराकाङ्क्षेऽङ्गे प्रदेशो न भवति, तावत्सन्दिग्धत्वात्तस्यां चावस्थायां बलवदसन्दिग्धप्रमाणेन बाधात् "ये यजमानास्त ऋत्विजो यो होता सोऽध्वर्युः" इत्यत्राङ्गकार्येषु प्राकृतर्त्विगध्वर्युनिराकाङ्क्षेषु यजमाने होतृसम्बन्धो न स्यात् । तथाच सति वरणामानमनार्थत्वात्सैव न स्यात्, 'विप्रतिषेधे करणं समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात्' ( जै. सू., ३. ८. २१. ) इति न्यायविरोधः स्यात् । अतो यत्किञ्चिदेतदिति । अतएवातिदेशिकबाधभयेनापि नोपदेशसङ्कोचः, तत्राप्यङ्गसम्बन्धिन्यृत्विगध्वर्युकार्ये बाधभयेनैव यजमानहोतृनिवृत्तिप्रसङ्गात् । सौमि-

कमहावेदिविधिस्तु दीक्षणीयातिथ्यादेर्नेष्यत एव। "चिकीर्षया च संयोगात्' (जै. सू., ३. ७. ७.) इत्यत्र महावेदिः सर्वाङ्गाप्येतज्ज्योतिष्टोमार्थत्वस्यैव वार्तिककारपादैरुक्तत्वात्। वेदेरपि प्रसङ्गन्यायस्तु भाष्यकारोक्तप्रयोजनदूषणाय भाष्यकारमतेनैवोक्तः। न च तन्मतेऽप्यतिदेशबाधभिया महावेदिविधेर्दीक्षणीयादिपरित्यागः, किन्तु क्वचिद्बाधकत्वं क्वचिद्बाधानपेक्षत्वं क्वचित् प्रकार्याश्रयत्वमित्यादिविधिवैरूप्यभयेनैव। एवं "षड्भिर्दीक्षयति" इत्यत्रापि नातिदेशबाधभयेनोपदेशसङ्कोचः। किन्तु प्राकृतषण्मन्त्रकार्यासु दीक्षादिषु वैकृतषण्मन्त्रसम्बन्धे 'द्वादश जुहोति" इति वैकृताभ्यस्ताः षड्जुहोतयः श्रूयन्ते। तत्र किं वैकृतैरेव मन्त्रैरभ्यासः क्रियतां ? प्राकृतैर्वेति सन्देहे उपदेशाभावेन कल्पनीयोऽयमभ्याससम्बन्धः अतिदेशानुग्रहार्थं प्रकृतातिदिष्टमन्त्रषट्कस्यैव कल्प्यते। इह तूपदेशत एव स्रुङ्मात्रसम्बन्धो नातिदेशबाधभिया सङ्कोचमर्हतीति वैषम्यम्।

यत्तु कैश्चित् "यस्योभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र विकृतावतिदेशप्राप्तस्य चतुर्मुष्टिनिर्वापस्यान्यतरबाधेनोपपत्तौ नोभयबाध इति मुष्टिमात्रबाधनमत्र दृष्टान्तत्वेन दर्शितम्, तदयुक्तम्; न हि तत्रौपदेशिको बाधः, किं तर्ह्युभयाबाधे चतुर्मुष्टिव्रीहीणां पञ्चशरावौदनानिष्पत्तेरर्थासम्भवेनावश्यकेऽन्यतर-

बाधे प्राथम्यात्संख्यानुग्रहेण मुष्टिमात्रबाधो युक्त एव। अत्र त्वौपदेशिकत्वाद्बाधस्यातुल्यत्वमिति न किञ्चिदनुपपन्नमिति। अथाङ्गानामेवातिदेशिकी प्राप्तिः, अनङ्गानां तु सम्मार्गस्रुचां विकृतावप्यौपदेशिकी, इतरथा पवमानेष्टेरप्यतिदेशप्रसङ्गः। तेनोपदेशयोस्तुल्यबलत्वाद्दुर्बलातिदेशोपनीतप्रधानस्रुचामेव बाध इति। मैवम्; किमतिदिष्टाङ्गाक्षेपलभ्यत्वादङ्गानामौपदेशिकत्वम्? अथ सम्मार्गोद्देशेन विहितानां स्रुचां प्रकृतिविकृतिसाधारण एवोपदेश? इति। न तावदाद्यः कल्पः—अतिदेशाक्षेपलभ्यस्यातिदेशतोऽपि जघन्यत्वेन सुतरां बाध्यत्वात्। नापि द्वितीयः; तथा च सति विकृतिश्रुतोऽपि प्रयाजोद्देशेन कृष्णलहोमः प्रकृतावप्रकृतावपि प्रसज्येत। न च पवमानेष्ट्यतिदेशप्रसङ्गः, प्रकृतावेव "यदाहवनीये जुहोति" इति बहिर्निष्पन्नस्याहवनीयस्याङ्गत्वविधानाद्विकृतावपि तथाभूतस्यैव तथा प्राप्तत्वात्।

अथोच्येत—आतिदेशिकत्वेऽप्यस्ति प्राप्तिकालवैषम्यम्, यतः करणोपकारस्याङ्गजन्यत्वेन प्रथमं सम्बन्धः, पश्चादङ्गाभिसम्बन्धः। तत्र प्रथमप्राप्तहोमः स्रुङ्निराकाङ्क्षोऽयं शमीमयीविधिर्न चरमभाविसम्मार्गस्रुक्प्राप्तिकालमपेक्षत इति, तदयुक्तम्; तथा सति बर्हिर्विधिरपि ग्राहकप्रकरणाभ्यां प्रथमं प्राधानीयहविरासादनस्यैव प्राप्तत्वादुपकारतामात्रेण चरमभाविनीमङ्गहविरासादनप्राप्तिमतिल-

द्व्यात् । बार्हिषां प्रधानमात्रसम्बन्धः स्यात् । यथाच तत्र तथा-त्रापीति प्राप्तिकालवैषम्येऽपि च बर्हिर्मुद्रार्थः । विशेषतश्चात्र प्राप्ति-कालवैषम्यमपि न सम्भवति । यतो येनोपकारपृष्ठभावेन ह्यङ्गसम्ब-न्धो भवन् यथाभूतानामेवोपकारजननसामर्थ्यं प्रकृताववगतं, तथा-भूतानामेवातिदेशिकस्सम्बन्धो वक्तव्यः । स्वाङ्गसहितस्यैव प्रकृता-वुपकारजनकत्वावगमात्सहैव प्राप्तेरेतदपि यत्किञ्चिदिति । एतच्च सर्वं सम्मार्गस्रुचां दीक्षणीयावाङ्नियमवत्सम्मार्गापूर्वगृहीतत्वमभ्यु-पेत्योक्तम् ।

परमार्थतस्तु—नैतत्सम्भवति, यतोऽधिकारविधिसन्निधिश्रु-तानामङ्गानां प्रथममनभिव्यक्तस्वापूर्वाणामेवाधिकारविधिगृहीत-त्वात्सम्मार्गस्रुचामप्यधिकारापूर्वीयत्वमेव । किञ्चैकवाक्योपात्ता-नां सर्वत्रैककार्यपरत्वव्युत्पत्तेरेकस्मिन्नेव “स्रुचः सम्मार्ष्टि” इति वाक्ये संमार्गस्य प्रधानापूर्वपरत्वं स्रुचां सम्मार्गापूर्वपरत्वमिति व्युत्पत्त्यनुरोधादप्ययुक्तम् । तेन सर्वेषां प्रधानापूर्वपरत्वमेवेति ।

यत्तु स्ववाक्यस्था हि कार्यावगतिर्बलीयसीत्युक्तम् । तदेक-वाक्यगतसर्वपदार्थानां श्रुत्यनुसारेणैककार्यपरत्वाविरोधे सतीति द्रष्टव्यम् । दीक्षणीयायान्तु “आग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाणः” इति वाक्येन द्रव्यदेवताविशिष्टस्यैव दीक्षणीयाया अधिकारापूर्वान्वयोत्तरकालं सम्भूयोपकारजननार्थमपूर्वान्तराभि-

व्यक्तौ ज्ञातायां "यावत्या वाचा कामयते तावत्या दीक्षणीयायामनुब्रूयात्" इत्यनेन वाक्येनान्तरङ्गलक्षणया अपूर्वान्वयमात्रपरेण युक्तं वाङ्नियमस्य तन्मात्रप्रतिष्ठितत्वम्, न चेह तथेति वैषम्यम्। एवञ्च सति सम्मार्गस्रुचामपि प्रधानापूर्वीयत्वाद्धोमस्रुचामप्यविशेषाच्छमीमयीत्वमेवेति। यदपि प्रसङ्गन्यायनिराकरणार्थं स्रुचां प्रयोगाद्बहिरुपादानं सौमिकवेदिवैधर्म्यमुक्तम्, तदयुक्तमुक्तम्; विकल्पासहत्वात्। तथाहि— यदेतत्प्रयोगानुपात्तानामपि नानावृत्तीयस्रुचां यज्ञदेशानयनम्, तत्किं सम्मार्गार्थेन प्रयोगविध्युक्तम्? सम्पातायाता वा? पूर्वस्मिन् कल्पे वरुणप्रघासार्थानीतानां शमीमयीनां तत्रापि प्रसङ्गो दुर्वारः। एवमेवाग्निहोत्रोपात्तानां यजमानगृहवर्तिनीनामपि नानावृत्तीयस्रुचां वरुणप्रघासदेशसम्मार्गानयनं सम्पातायातत्वं च निराकरणीयमित्यलमतिविस्तरेणेति। तस्माद्यथावार्तिकमेव स्रुगुदाहरणप्रयोजनमभिधीयते।

तथाहि—स्रुक्सम्मार्गस्य प्रकृतौ कपिञ्जलन्यायेन तिसृभिः स्रुग्भिः साधितत्वात्पात्रविवृद्धावपि प्रकृतौ पशुचातुर्मास्येषु तिस्र एव सम्मार्ष्टव्याः पूर्वपक्षे। सिद्धान्ते तु प्रयोजनवत्त्वेन सर्वा एव स्रुचः सम्मार्ष्टव्याः, संस्कारस्य प्रतिप्रधानावृत्तित्वात्। उदाहरणान्तरप्रयोजनानि तु वार्तिक एव सुगमानीति।

सूत्रन्तु—अवहन्त्यादिवद्द्वितीयाश्रुतेस्तुल्यत्वादितरैरवहन्त्यादिभिः सम्मार्गादिसमानधर्मं स्याद्गुणकर्मेत्यर्थः ॥

इति पञ्चमं सम्मार्गाधिकरणम् ॥ ५ ॥

अथ षष्ठं स्तुतशस्त्राधिकरणम्

स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥
२.१.१३॥

(विषयसंशयसङ्गतयः)

"प्रउगं शंसति" "निष्केवल्यं शंसति' "आज्यैः स्तुवते" "पृष्ठैः स्तुवते" इति। गुणवचनं स्तवनं शंसनञ्च। यथा "इन्द्रस्य नु वीर्याणि प्रवोचम्" इति। यदेतद्गुणवचनं क्रियते, किमेतद्गुणभूतं देवतां प्रति ? उत प्रधानभूतमिति। "तानि द्वैधम्" इत्यभिधाय सूत्रद्वयेन प्रधानकर्मलक्षणं गुणकर्मलक्षणञ्चोक्तम्। तत्र पूर्वाधिकरणेन प्रधानकर्मलक्षणमपोद्य सम्प्रति गुणकर्मलक्षणापवादः क्रियते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तत्र द्रव्यप्रधानत्वात्' इति गुणकर्मलक्षणम्। तच्चात्र स्तोत्रशस्त्रयोरप्यविशिष्टम्। तथाहि—प्रगीतमन्त्रसाध्या स्तुतिः स्तो-

त्रम्। सैवाप्रगीतमन्त्रसाध्या शस्त्रं चेति। स्तुतिश्च गुणगुणिसङ्कीर्तनम्, तद्गुणस्य प्रकृतकर्मानङ्गत्वादेकान्तेन भवतु स्तुत्यर्थत्वम्। गुणिनस्तु प्रकृतकर्मोपयोगित्वाद्गुणसम्बन्धितया तत्कीर्तनं प्रकृतकर्मोपयुक्तदेवतास्मारकतया तदर्थमेव युक्तम्। तदुक्तम्—

दृष्टेन क्रतुसिद्ध्यर्थी साधयन्ति यतः स्मृतिम्।
स्तोत्रशस्त्राणि तेन स्युः संस्कारा देवताः प्रति॥ इति।

(तं. वा., पृ. ४१६)

ननु स्तुतेर्देवतासंस्कारत्वे ज्योतिष्टोमप्रकरणे माहेन्द्रग्रहयजिसन्निधिश्रुतस्यैन्द्रप्रगाथस्य प्रकाश्यभूतेन्द्रानुरोधेन यत्रेन्द्रस्तत्रोत्कर्षः प्रसज्येत। न चेन्द्रस्यैव महत्वगुणयुक्तस्य महेन्द्रत्वादर्थाभेदादनुत्कर्ष इति वाच्यम्। यतो 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्' (जै. सू. १०.४.२३.) इत्यनेन न्यायेन येनैव शब्देन देवता विहितास्तेनैव शब्देन परं मन्त्रस्य देवताप्रकाशकत्वम्, न तु शब्दान्तरेण। न चैन्द्रप्रगाथे महेन्द्रशब्दः समस्ति। तदुक्तम्—

श्रुत्या हि देवता यागे समवैति न रूपतः।
तस्मान्महेन्द्रशब्दोऽस्या महेन्द्रो देवतेष्यते॥ इति।

(तं. वा., पृ. ४२२)

किञ्च विशेषतोऽत्रार्थभेदोऽप्यस्ति । निर्गुणादिन्द्रात्सगुणस्यार्थान्तरत्वात् । तदुक्तम्—

अर्थोऽपि यादृशो यत्र देवतात्वेन चोदितः ।
मनागपि ततोऽन्यत्वे देवतेति न गम्यते ॥ इति ।

(तं. वा., पृ. ४२२)

उच्यते—सिद्धे हि विध्यपेक्षितस्तुतिसाधनमन्त्रलिङ्गबलेन यागीयदेवतास्मारकत्वे प्रमाणबलादुत्कर्षो भवन्न दोषमावहति । तथा च दर्शपूर्णमासप्रकरणगतानां पूषाद्यनुमन्त्रणमन्त्राणां पूषादिदैवत्ये कर्मण्युत्कर्षः । तेनैन्द्रप्रगाथो यत्रेन्द्रो देवता तत्रैवोत्कृष्य प्रयोक्तव्यः । मण्डूकसूक्तस्याग्नौ प्रयोगः । तत्र "मण्डूकेनाग्निं विकर्षात" इति श्रुतेः । अक्षसूक्तस्य च राजसूये, तत्रैव "अक्षैर्दीव्यति" इति विधानात् । एवमन्यदप्यूहनीयम् । येषान्तु कुसुम्भ सूक्तादीनां क्वचिदपि समवेतोऽर्थो नोपलभ्यते, तेषां वाचस्तोमे "सर्वा ऋचः सर्वाणि सामानि सर्वाणि यजूंषि वाचस्तोमे पारिप्लवं शंसन्ति' इति वचनबलेन दृष्टार्थता भविष्यतीति । तथा आश्विनग्रहसम्बन्धि शस्त्ररूपायां स्तुतौ क्रियमाणायां "यदि सूर्यो नोदियात् अपि सर्वा दाशतयीरनुब्रूयात्" इति स्तुतेस्तत्रादृष्टार्थतयार्थवत्ता भविष्यतीति । अथवा वचनबलादेव वाचस्तोमे आश्विनग्रहस्तुतेर्वृत्त्यन्तरेणैव चैन्द्रीन्यायेन समवेतदेवताप्रकाशनं भविष्यतीति नानुपपन्नम् ।

यत्तु मनोतामन्त्रस्थाग्निशब्देन यथा अग्नीषोमप्रकाशनम्, तथेन्द्रशब्दादीनामपि महेन्द्रप्रकाशनमनुत्कर्षकारणमुक्तम्, तदपि प्रौढवादमात्रम् । यतो "यद्यप्यन्यदेवत्यः पशुस्तथाप्याग्नेय्येव मनोता कार्या" इति एतद्वचनबलात्तत्र तथा कृतम् । न चेह तथाभूतं वचनमस्तीत्युत्कर्ष एवेति । तेन सर्वत्रैव स्तोत्रशस्त्रयोर्गुणकर्मत्वान्मन्त्राणां समवेतार्थानां प्रकरण एव देवताप्रकाशनम्, असमवेतार्थानां तूत्कर्ष एवेति यागीयदेवतास्मारकत्वाद्याज्यानुवचनवददृष्टार्थत्वेन संस्कारकर्मत्वमेवेत्येवं प्राप्ते अभिधीयते—

अपिवा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २. १. २४. ॥

(सिद्धान्तः)

भवेदेवं यदि स्तुतेर्मन्त्रद्वारेण यागीयदेवताप्रकाशनार्थत्वे सन्निधिक्लृप्तश्रुतिबाधो न भवेत् । तथाहि—माहेन्द्रग्रहयागसन्निधौ "पृष्ठैः स्तुवत' इति पृष्ठनामधेया स्तुतिर्विधीयमाना प्रकरणेन माहेन्द्रग्रहयागसाधनम्, तथा "रथन्तरं भवति" इति श्रुतेर्देवताप्रकाशनार्थत्वेन गुणकर्मत्वम्, तदा स्तुतिसहितस्यैव माहेन्द्रयागादपकर्षे सन्निधिक्लृप्ता श्रुतिर्बाध्येत । यदा तु देवतायाः स्तुत्यर्थत्वेन

स्तुतेरेव प्रधानकर्मत्वम्, तदा प्रकरणात् स्तुतेर्ग्रहयागाङ्गत्वं, क्रमाच्च मन्त्रस्य स्तुत्यङ्गत्वमिति श्रुतेरबाध इति।

न च वाच्यम्—पूषाद्यनुमन्त्रणमन्त्रवत्सन्निधिबाधेन लिङ्गाबाधादुत्कर्षो भविष्यतीति। यतः सामर्थ्यरूपं हि लिङ्गम्। तच्च सति सामान्यसम्बन्धे किमनेन कर्तव्यमिति विशेषाकांक्षायां यच्छक्नोति कर्तुं तत्कुर्यादित्येवं विनियुङ्क्ते। न चात्र सामान्यसम्बन्धापादकं किञ्चित्प्रमाणमस्ति। पूषाद्यनुमन्त्रणमन्त्राणान्तु समाख्यया सामान्येन लब्धयागसम्बन्धानां तद्विशेषापेक्षायां लिङ्गेन पूषदेवत्ये यागे विनियोगो युक्त एवेति वैषम्यम्। तदुक्तम्—

> प्रकृतस्तोत्रशेषत्वं श्रुत्या सन्निधिक्लृप्तया।
> विना सामान्यसम्बन्धाल्लिङ्गं चाविनियोजकम्॥ इति।
>
> (तं. वा., पृ. ४२७)

तेन यद्यपि मन्त्रस्य समवेतार्थत्वं सम्भवति, तथापि "पृष्ठैः स्तुवते" "आज्यैः स्तुवते" इत्येकवाक्यविहितानां पृष्ठाज्यस्तोत्राणां क्वचिद्गुणकर्मत्वं क्वचित्प्रधानकर्मत्वमिति वैरूप्यासम्भवात्सर्वत्र स्तुतेः प्रधानकर्मत्वमेवेति। एवञ्च सति "कवतीषु स्तुवते" "इन्द्रस्य नु वीर्याणि प्रवोचं" "प्रउगं शंसति" इति सप्तमीषष्ठीद्वितीयाश्रुतयः, स्तौतिशंसतिश्रुती च स्वार्थवृत्ता भविष्यन्ति। स्तुतेश्च गुणकर्मत्वे अस्वार्थवृत्तय इति।

प्रयोजनम्——स्तुतशस्त्रयोर्गुणकर्मत्वात्प्रगाथयोरुत्कर्षेणानुष्ठानम्। प्रधानकर्मत्वे त्वनुत्कर्षेणेति।

सूत्रन्तु——सन्निधिक्लृप्तश्रुतिसंयोगात्सप्तम्यादिश्रुतिसंयोगाज्ज्योतिष्टोमप्रकरण एव स्तौतिशंसती द्वे आख्याते प्रधानभूतस्तुतिभावनारूपकर्मोत्पत्तिविधानम् कुरुत इत्यर्थः॥

इति षष्ठं स्तुतशस्त्राधिकरणम्॥ ६॥

## अथ सप्तमं विधिमन्त्राधिकरणम्

विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात्॥ २. १. ३०.॥

(विषयसंशयौ)

इदमाम्नायते——"न ता नशन्ति न दभाति तस्करः नैना अमित्रो व्यथिरादधर्षति। देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह" (तै. ब्रा., २. ४. ६.) इति। यजते ददाति जुहोतीत्युदाहरणम्। किं यद्वद्ब्राह्मणशब्दो विधायकस्तद्वन्मन्त्रोऽपि, उत मन्त्रोऽभिधायक इति।

अत्र भाष्यकारेण मन्त्रगतानेव भावशब्दानुदाहृत्य विचारितम्। तदयुक्तम्; यतो न हि मन्त्रे सर्वे भावशब्दा अभिधायकाः। "वसन्ताय कपिञ्जलानालभत" (मै. स., ३. १४. १.) इत्यत्र विधायकस्यापि दर्शनात्। नापि ब्राह्मणे भाव शब्दा सर्वे विधायकाः। "यस्योभयं हविरार्त्तिमार्च्छेत्" (तै. ब्रा., ३. ७. १.) "य एवं विद्वा-

पौर्णमासीं यजत" इत्यादिष्वभिधानमात्रदर्शनात् । तस्मादविशेषेण यथावार्तिकमेवाधिकरणं वर्णनीयम् ।

(सङ्गतिः)

अध्यायार्थभूतस्य कर्मभेदस्योपोद्घातभूतं भावार्थविचारं सापवादं परिसमाप्येदानीं मन्त्रब्राह्मणगताख्यातशब्दानामुक्त-गुणप्रधानरूपद्वैविध्यप्रसङ्गेनेदं विचार्यते—किं सर्वाख्यातशब्दानां गुणप्रधानकर्मविधायकत्वमेव परम्, अस्ति वा तृतीयोऽपि प्रकारः कर्माभिधायकत्वमात्रमेवेति ।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—त एव विधिप्रत्ययवन्तो भावशब्दाः क्वचिद्विधायकाः क्वचिच्चाभिधानकर्ममात्रपर्यवसायिन इत्ययुक्तम् । एकरूपत्वेन शब्दशक्त्यविशेषात् । न च यच्छब्दसन्नि-धृष्युपघातकर्मत्वेन विधिप्रत्यययोगेऽप्यविधायकत्वादभिधानमात्रपर्य-वसायित्वमेवेति वाच्यम् । "यदाग्नेयोऽष्टाकपालो भवति" इत्यादिषु यच्छब्दयुक्तस्यापि विधायकत्वात् । अतः सर्वत्र विध्युद्देशे मन्त्रे च भावशब्दानामेकरूपत्वादेकार्थविध्यर्थत्वम्, विधानस्य द्वैविध्यगुण-कर्मप्रधानकर्मविधायकत्वमेव परम्, न तु कर्माभिधायकत्वमात्र-मपि तृतीयप्रकारोऽस्तीत्येवं प्राप्ते अभिधीयते—

अपिवा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ॥
॥ २. १. ३१. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेतदेवं यदि यच्छब्दादिप्रयोगात् केषुचिद्विधिशक्त्युपघातो न भवेत् । तथाहि—सर्वत्र खलु यच्छब्दादियोगादनुवादता परिस्फुरति । तद्यत्र क्रियायोगात् यच्छब्दस्तत्र यच्छब्देन यथावगतां क्रियामनूद्य तद्गतायां पुरुषप्रवृत्तौ विधीयमानायां न विधिशक्तिस्तिरोधीयते । विधेयभूतायाः पुरुषप्रवृत्तेरननुवादात्कर्तृयोगिनि यच्छब्दे यः करोतीति प्रवृत्तेरेवानूदितत्वाद्भवति विधिशक्त्युवघात इति । तेन भवतु "यस्योभयं हविरार्तिमार्च्छेत्" "य एवं विद्वान् पौर्णमासीं यजते" इत्यादिकर्तृयोगित्वाद्यच्छब्दस्य विधिशक्त्युपघातः । "यदाग्नेयोऽष्टाकपाल" इत्यादिषु क्रियायोगित्वाद्यच्छब्दस्य विधिशक्तिरव्याहतैवेति । तदुक्तं पौर्णमास्यधिकरणे—

क्रियापदैकयोगित्वे यच्छब्दो न रुजेद्विधिम् ।
कर्तृयुक्तः स एवान्यप्रापितार्थानुवादकृत् ॥ इति ।

(तं. वा., पृ. ४८८)

स च कर्तृयुक्तयच्छब्दाद्युपबन्धो मन्त्रे ब्राह्मणे वा अविशिष्ट

एवेति तद्वशेन विधिशक्त्युपघाते सति कर्माभिधायकत्वमात्रमुभयत्रापीति । तदुक्तम्—

> येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात् ।
> विधिशक्तिः प्रणश्येत्तु ते सर्वत्राभिधायकाः ॥ इति ।
>
> (तं. वा., पृ. ४३३)

अतोऽस्ति तृतीयोऽपि प्रकार इति ।

इदन्त्विह वक्तव्यम्—अत्र यच्छब्दाद्युपबन्धेन मन्त्रब्राह्मणवाक्यगताख्यातशब्दस्याभिधायकत्वमभिमतं पदार्थे? वाक्यार्थे वा?। न तावत्पदार्थे; अभिधायकवाक्यगतस्याख्यातशब्दस्य पदार्थाभिधायकत्वाविशेषात् । नापि वाक्यार्थे; सर्वत्रैव वाक्यार्थस्य गम्यमानत्वेनानभिधेयत्वात् । अथैतदेव वाक्यार्थाभिधानं यत् स्थलविशेषे विशेषणान्वययोग्यप्रधानीभूतपदार्थाभिधानम्, तदा ब्राह्मणे यच्छब्दाद्युपबन्धस्य·······विशेषणीभूतार्थप्रतिपादकत्वेन तथाभूतार्थानभिधानेनाभिधायकत्वमिति । सत्यं ते सर्वत्राभिधायका इत्यनेन सर्वत्राभिधायकत्वमभिमतम्, किन्तु अभिधायकत्वेन विशेषार्थप्रतिपादकत्वमात्रम् । तच्च ब्राह्मणे मन्त्रे च समानमेव । तत्र "न ता नशन्ति" इत्यत्र यच्छब्दः, "अहे बुध्न्य मन्त्रं मे गोपाय" इत्यामन्त्रणविभक्तिः, "दामि, गृह्णामि" इत्युत्तमपुरुषः, "यदि सोम-

मपहरेयुः" इत्यत्र यदिशब्दः, यदित्येवमादयः। प्रायेण मन्त्रेष्विति सूत्रे मन्त्रोपन्यासः।

किन्त्वेतावानत्र विशेषः—ब्राह्मणगतानां स्वरूपमेवोपलभ्य विधित्वनिवृत्तौ सत्यां स्वरूपादेव कर्मसु प्रयोगानर्हत्वात् निमित्तादिष्वख्यापनार्थतैव। मन्त्रगतानां तु दामि गृह्णामि निर्वपतीत्येवमादीनां स्वरूपमेवोपलभ्य शक्यमेभिः कर्म कर्तुमिति विनियोगबुद्धिर्भवति। तदुक्तम्—

"अनुष्ठाने पदार्थानामवश्यंभाविनी स्मृतिः।
अनन्यसाधनानन्यकार्यैर्मन्त्रैर्नियम्यते" ॥ इति।

(तं. वा., पृ. ४३३)

तेन संशयोऽत्र किं प्रधानरूपकर्मविधायकत्वमेव परं सर्वत्र? अथ विधायकत्वमपि? कर्मणि प्रतिपादकत्वमपि तृतीयः प्रकारोऽस्तीति मन्तव्यम्।

प्रयोजनं पूर्वपक्षे—विधायकत्वे सर्वत्राख्यातानामभ्यासात्कर्मभेदेऽनुष्ठानभेदः। सिद्धान्ते तु नैवम्।

सूत्रन्तु—यच्छब्दाद्युपबन्धः स्यात्। मन्त्रग्रहणमुपलक्षणार्थम्, तेनायमर्थः—यच्छब्दाद्युपबन्धसहितमाख्यातमभिधानवाचकं विधिशून्यमत्यायनमात्रहेतुभूतं प्रयोगसामर्थ्यादिति ॥

इति सप्तमं विधिमन्त्राधिरणम् ॥७॥

## अथाष्टमं मन्त्रलक्षणाधिकरणम्

## तच्चोदकेषु मन्त्राख्या ॥ २. १. ३२ ॥

(विषयसंशयसङ्गतयः)

मन्त्रगतो भावशब्दो विधायको नेति परीक्षितुं कोऽयं मन्त्रो नामेति वेदवाक्यगतभावशब्दानां गुणकर्मप्रधानद्वैविध्येऽवधारिते तत्प्रसङ्गेन कर्मप्रतिपादकत्वरूपं तृतीयं प्रकारं प्रतिपाद्येदानीं प्रसङ्गेनैव वेदवाक्यगतमन्त्रपदस्यार्थो निरूप्यते—कोऽयं मन्त्रो नामेति।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—न तावन्मन्त्रसंहितायां पाठो मन्त्रलक्षणम्, ब्राह्मणमध्येऽपि मन्त्रपाठदर्शनात्। नापि ब्राह्मणविनियोज्यत्वलक्षणम्, लिङ्गप्रकरणविनियोज्यानामपि मन्त्रत्वात्। नाप्यस्यन्तादिरूपता मन्त्रलक्षणम्, ब्राह्मणेऽपि तस्य भावात्, मन्त्रेषु च केषुचिदभावात्। तेन सर्वेषामेव तद्व्यभिचारादनेकार्थत्वमेव मन्त्रशब्दस्येत्येवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यद्यत्र वृद्धोपदेशो न स्यात्। तथाहि—येषु वाक्येषु वृद्धाः प्रयुञ्जते—'मन्त्रानधीमहे' 'मन्त्रानध्यापयामः'

'मन्त्रा वर्तन्ते' इति। अभियुक्तमूलश्च शब्दार्थावधारणम्। तेन मन्त्रसंहितापाठादीनां व्यभिचारेऽप्यध्यापकवृद्धा यत्र मन्त्रशब्दं प्रयुञ्जते, ते मन्त्रा इति भवति व्यवस्था। तदुक्तम्—

स्वाध्याये पठ्यमानेषु येषु मन्त्रपदं स्थितम्।
ते मन्त्रा नाभिधानं हि मन्त्राणां लक्षणं स्थितम्॥ इति।

(तं. वा., पृ. ४३७)

प्रयोजनश्चात्र लक्षणप्रतिपत्तिलाघवातिरिक्तमन्यन्नास्ति। तदुक्तं भाष्ये—

आक्षेपे चापवादे च प्राप्त्यां लक्षणकर्मणि।
प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्त्तते॥ इति।

(शा. भा., पृ. ४३५ पू. सं.)

सूत्रन्तु—तदनुष्ठीयमानकर्माभिधानं प्रयोजनं येषां वाक्यानां तानि तथोक्तानि। तेषु मन्त्राख्या मन्त्रशब्दप्रयोग इत्यर्थः। एतदपि प्रायिकत्वात्स्वाध्यायकालाध्यापकत्वयोगलक्षणमेवेति॥

इत्यष्टमं मन्त्रलक्षणाधिकरणम्॥ ८॥

## अथ नवमं ब्राह्मणलक्षणाधिकरणम्

### शेषे ब्राह्मणशब्दः ॥ २. १. ३३. ॥

( विषयसंशयसङ्गतयः )

अथ किंलक्षणम् ब्राह्मणम् । मन्त्राश्च ब्राह्मणम् । मन्त्राश्च ब्राह्मणाश्च वेदः । तत्र मन्त्रलक्षण उक्ते परिशेषसिद्धत्वाद् ब्राह्मलक्षणमवचनीयम्, तल्लक्षणेनैव सिद्धत्वात् । यस्यैतल्लक्षणं नास्ति तद्ब्राह्मणमिति परिशिष्टं ब्राह्मणमिति । वेदवाक्यगतमन्त्र-पदस्यार्थं प्रसङ्गेन निरूप्य तत्प्रसङ्गेनैव वेदवाक्यगतस्य ब्राह्मण-पदस्यार्थो निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—"अहे बुध्निय मन्त्रं मे गोपाय" (तै. ब्रा., १.२.१.) इति वेदे श्रूयते । तथा "एतद्ब्राह्मणान्येतानि यद्ब्राह्मणकानीतराणि" इति वेदवाक्ये ब्राह्मणपदमपि श्रूयते । न चेतिकरणबहुलत्वमाख्यायिकास्वरूपत्वं वा ब्राह्मणलक्षणं भवि-तुमर्हति, मन्त्रेष्वपि गतत्वात् । न च मन्त्रव्यावृत्तमन्यल्लक्षणा-न्तरमस्ति । अतोऽनेकार्यत्वमेव ब्राह्मणशब्दस्येत्येवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—मन्त्रब्राह्मणात्मको हि वेदः, तेन मन्त्रलक्षण उक्तेऽर्थात्परिशिष्टो वेदो ब्राह्मणपदस्यार्थ इत्यवधारणात् परिशेषसिद्धं ब्राह्मणलक्षणमवचनीयम् । न चैतावता सूत्रप्रणयनं व्यर्थमिति वाच्यम्, यो हि मन्त्रब्रह्मणात्मको वेद इति न जानाति तस्य तृतीयराशिशङ्कानिरासार्थत्वेन सूत्रप्रणनयस्यार्थवत्वादिति ।

प्रयोजनम्—पूर्वाधिकरणवदेव प्रतिपत्तिलाघवम् । सूत्रन्तु सुबोधमेवेति ॥

इति नवमं ब्राह्मणलक्षणाधिकरणम् ॥ ९ ॥

अथ दशममूहाद्यमन्त्रताधिकरणम्

अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागस्स्यात् ॥

२. १. ३४. ॥

( विषयसंशयौ )

ऊहप्रवरनामधेयेषु संशयः । मन्त्रब्राह्मणात्मके वेदे निरूपिते ऊहप्रवरनामधेयान्यपि मन्त्रान्तर्गतत्वात् प्रसङ्गेन मन्त्रा नेति विचार्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—विकृतावतिदिष्टे तु प्रकृतिसमवेतार्थाभिधायिपदोद्धारेण विकृतौ समवेतार्थाभिधायि पदमूह्यते ।

एवं 'प्रवरयजमानादीन् कीर्तयेत्' इति वचनेन यजमानस्य प्रवर-कीर्तनं नामधेयकीर्तनञ्च मन्त्रविहितमस्ति । तत्रोहितपदस्य प्रवरपदस्य नामधेयपदस्य च मन्त्रमध्यपतनात्तत्सहितस्यैव च मन्त्रस्य विहितार्थस्मारकत्वात्तेषामपि मन्त्रत्वमेवेत्येवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि मन्त्रमध्यपातो विहितार्थस्मारकत्वं वा मन्त्रलक्षणं ब्रूमः, किन्त्वध्ययनकालेऽभियुक्तमन्त्रपदविषयत्वम् । न चोहप्रवरनामधेयेषु मन्त्रपदप्रयोगविषयत्वमस्ति । तदुक्तम्—'स्वाध्याये पठ्यमानेषु येषु' इति ।

इदानीं भाष्यकारानभिहितमपि प्रकृतोपयोगितया विचारा-न्तरमारभ्यते । किमूहप्रवरनामधेयानां निक्षेपे सर्वस्यैवामन्त्रत्वम्, उत निक्षिप्तस्यैवेति ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यथा अधीतस्वरवर्णक्रमप्रत्य-भिज्ञाने मन्त्रत्वप्रत्यभिज्ञानं भवति । तदन्यत्वे तु मन्त्रत्वप्रत्यभिज्ञाना-भावादमन्त्रत्वमेवेति । तदुक्तम्—

स्वरवर्णानुपूर्व्यादिविशिष्टे हि प्रयुज्यते ।
मन्त्रशब्दस्ततोऽन्यत्वे न तस्यार्थः प्रतीयते ॥ इति ।

(तं. वा., पृ. ४३७)

तस्मादेकवर्णापायेऽप्यमन्त्रत्वमेवेत्येवंप्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यवयविनः समूहस्य वा एकदेशापायेऽपि प्रत्यभिज्ञायमानं ताद्रूप्यं विहन्येत। न हि गोर्गड्डुनि जाते विषाणे वा भग्ने गोत्वप्रत्यभिज्ञासिद्धिः। वने वा कतिपयवृक्षोपचयापचयाभ्यां प्रत्यभिज्ञासिद्धेः समूहे प्रत्ययो भवति। तद्वदिहाप्येकावयवाभावेऽपि पदान्तरप्रक्षेपेऽपि प्रत्यक्षेण चाध्ययनकालावगतमन्त्ररूपप्रत्यभिज्ञानात् प्रक्षिप्तपदमात्रस्यैवामन्त्रत्वम्, न तु सर्वस्यैवेति। तदुक्तम्—

आकृतीनामभिव्यक्तिर्या कथंचिन्निरूपिता।
नासाववयवाधिक्यविनाशेषु विनश्यति॥ इति।

( तं. वा., पृ. ४३८ )

अत्र च पदत्ववाक्यत्वयोरनिष्टत्वादाकृतिग्रहणं गोत्वदृष्टान्तार्थमिति। न च "न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्" इत्यत्रापि गिरापदोद्धारेण इरापदस्यामन्त्रत्वप्रसङ्ग इति वाच्यम्। अध्ययनकाल एवालोच्येदमवगतम्—यत् प्रकृतौ गिरापदवानयं मन्त्रः, विकृताविरापदवानिति। तेन वेदप्रतिपादितेरापदस्य

भवतु मन्त्रत्वम् । सूर्यादिपदानान्तु न्यायगम्यत्वादिति वैषम्यम् । तदुक्तम्—

यत्र वैदिकमन्यत्वं तत्र मन्त्रत्वमिष्यते ।
न्यायेन कल्प्यमाने तु न शक्यं तन्निरूपणम् ॥ इति ।

( तं. वा., पृ. ४३८ )

ननु सर्वशब्दावगम्या चोदना इति न्यायादूहादिकमपि न्यायगम्यश्रुतार्थापत्तिकल्पितवेदगम्यत्वादिरापदतुल्यमेवेति । मैवम् ; नियतस्वरक्रमोच्चारितमेव हि वाक्यं वेदः । तच्चाधीयमानमेव परं तथा भवति । तेन यत्किञ्चिच्छ्रुतार्थापत्त्या वेदे कल्प्यते तत्सर्वं वेदानुमतत्वाद्वेद इत्युच्यते । तेनोहादीनां वेदाप्रतिपादित्वान्नैवेरापदतुल्यत्वम् । नन्वेवमपि "प्रवरनामधेयानि कीर्तयेत्" इति प्रत्यक्षवेदोपदेशात्प्रवरनामधेययोर्मन्त्रत्वप्रसङ्गः, न चैतत् ; इरापदस्येव वेदे प्रवरनामधेययोर्मन्त्रत्वप्रयोज्यविशेषरूपेणाम्नानाभावात् । अत्र हि प्रवरशब्देनासितदेवलशाण्डिल्यादिप्रवराभिधायिपदकीर्त्तनम् , नामधेयशब्देन च यजमानाभिधायिविष्णुशर्मादिनामकीर्तनमभिमतम् । तेषां च वेदेऽनाम्नातत्वान्न मन्त्रत्वमिति । एवं तर्हि यत्र मन्त्रे "असावेष ते पिण्डः, ये चात्र त्वामनु याश्च त्वामनु तस्मै ते स्वधा" इति पठ्यते, तत्रापि सर्वनामस्थाने पितुर्नाम निक्षिप्यते, तस्य स्वरूपाम्नानाभावाद-

मन्त्रत्वप्रसङ्गः। नैतत्; आम्नानसमर्पितस्य हि मन्त्रत्वम्, तद्यदि सर्वनाम्नां तत्स्थानशब्दान्तरसमर्पकत्वं तदा तेषां मन्त्रत्वम्। अथाम्नातस्य सर्वनाम्नस्तेषां प्रयोगेऽप्रामाण्यम्, ततो न मन्त्रत्वम्। तत्र तावत् सर्वनामपदं 'प्रवरनामधेयानि कीर्त्तयेत्' इतिवत्प्रमाणम्। किन्तु पित्रादिविशेषनाम्नामानन्त्यादाम्नातुमशक्यत्वात् पित्रादि-विशेषार्थप्रतिपादनार्थम्, न चास्य स्वतस्तत्प्रतिपादनसामर्थ्यमस्तीति स्वयं प्रयोगानर्हं सद्विशेषशब्दानेव प्रयोगार्हानुपलक्षयति। अतः सर्वनामाम्नानमविवक्षितरूपं पित्राद्यर्थविशेषविषयान् प्रवरशब्दान् मन्त्रवाक्यनिवेशिनो दर्शयत्विति तदर्थमेव सर्व-नामपदमध्ययनविधिनाध्यापितमिति निश्चीयते। तस्मात् पित्रादिनाम्नामप्याम्नानप्रायत्वात् मन्त्रत्वमेवेति।

प्रयोजनम्—अमन्त्रत्वे मन्त्रभ्रंशप्रायश्चित्ताभावः, 'ह्ग्रहोर्भ-श्छन्दसि' इत्यादिच्छान्दसविकाराभावश्च। मन्त्रत्वे द्वयोरपि भाव इति।

सूत्रन्तु—अनाम्नातेषु ऊहप्रवरनामधेयेष्वमन्त्रत्वम्। आम्नातेषु 'मन्त्रोऽयमिदं ब्राह्मणम्' इत्येष विभाग इति॥

इति दशममूहप्रवरनामधेयाधिकरणम्॥१०॥

## अथैकादशमृग्लक्षणाधिकरणम्

### तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ २. १. ३५. ॥

(विषयसंशयसङ्गतयः)

ऋच इत्यस्ति वेदे "अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः ऋचः सामानि यजूंषि" ( तै. ब्रा., १.२.१. ) इति । कथंलक्षणिका ऋच इति प्रासङ्गिकमन्त्रविचारं परिसमाप्येदानीं मन्त्रविशेषश्रुतऋग्यजुःसामपदार्थनिरूपणमनुप्रसङ्गेन क्रियते ।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यत्रार्थेन पादव्यवस्था सा ऋगिति ऋग्लक्षणमुक्तम्, न चैतत्सम्भवति। "अग्निः पूर्वेभिः" इत्यत्र क्रियापदाभावेनार्थावच्छेदनिबन्धनपादव्यवस्थाव्यतिरेकेणापि ऋग्दर्शनात् । अतोऽनिरूपणमेव ऋक्पदार्थस्येत्येवंप्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यदि पादबद्धो मन्त्रः ऋक्त्वं व्यभिचरति । तथा हि पादबद्धे मन्त्रे अभियुक्ता ऋक्छब्दं प्रयुञ्जते। न लौकिकपदबन्धमात्रे । अत्र पादबद्धत्वं मन्त्रो-

पलक्षणार्थमेव । तेन "अग्निः पूर्वेभिर्ऋषिभिः" इत्यत्र क्रियापदानुपादानादर्थवशेन पादव्यवस्थाया अभावेऽपि गायत्र्यादिच्छन्दोवशेन पादव्यवस्थायामविरुद्धमृक्त्वमिति ।

प्रयोजनम्—पूर्ववदेव प्रतिपत्तिलाघवमिति ।

सूत्रन्त्वर्थवशेनेत्युपलक्षणम् । वृत्तवशेनापि यत्र गायत्र्यादिपादव्यवस्था सा ऋगिति ॥

इत्येकादशमृग्लक्षणाधिकरणम् ॥ ११ ॥

## अथ द्वादशं सामलक्षणाधिकरणम्

### गीतिषु सामाख्या ॥ २. १. ३६. ॥

(विषयसंशयौ)

अथ साम किंलक्षणम् । इदानीमनुप्रसङ्गेनैव सामशब्दार्थो निरूप्यते ।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—"अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः ऋचः सामानि यजूंषि" इति मन्त्र-

सामानाधिकरण्यं सामशब्दस्य श्रूयते। मन्त्रश्च वर्णात्मको न तु गानमात्रम्। किंच "साम्ना स्तुवीत" इति श्रूयते। स्तुतिश्च गुणगुणिसम्बन्धकीर्तनम्। न च गानमात्रेण तत्सम्भवति। तथा 'सामान्यध्यापयामः सामान्यधीमहे' इति गीयमान एव मन्त्रेऽभियुक्तोपदेशाद्गीयमान एव मन्त्रः सामशब्दाभिधेयः, न तु गीतिमात्रमिति। एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यद्युभयाभिधानशक्तिगौरवं न स्यात्। तथाहि—गीतिविशिष्टमन्त्राभिधाने विशेषणभूता गीतिस्तावदवश्यमग्रतोऽभिधातव्या। तथाहि "ऋच्यध्यूढं साम गायति" इत्यृगक्षरनियतवर्तित्वाद्गानविशेषस्य तदभिधानादेव मन्त्रप्रतीतिसिद्धेराकृत्यधिकरणन्यायेन गीतिवचनत्वमेव सामशब्दस्य। तदुक्तम्—

एकखण्डेन शब्देन विशिष्टो यत्र लभ्यते।
विशेषणस्य वाच्यत्वं तत्र सर्वत्र जायते॥ इति।

(तं. वा., पृ. ५४१)

तत्र यद्यपि समाशब्दाद्गीतिविशिष्टो मन्त्र एव प्रतीयते, तथापि वाचकशक्तिः सामशब्दस्य गोशब्दस्येव विशेषणमात्रविषया। विशेष्यभूतमन्त्रप्रतीतिस्तु व्यक्तिवदेव। अतो "गवा यजेत" इतिवत् "साम्ना स्तुवीत" इति स्वाश्रयभूतगुणद्वारेणोपप-

मेव स्तुतिसाधनत्वं गानस्य । मन्त्रशब्दसामानाधिकरण्यञ्च सामशब्दस्य ।

प्रयोजनम्—पूर्ववत्प्रतिपत्तिलाघवम् ।

सूत्रन्तु—सामशब्दस्य गाने वाचकशक्तिनिरूपणपरं सुबोधमेवेति ॥

इति द्वादशं सामलक्षणाधिकरणम् ॥ १२ ॥

## अथ त्रयोदशं यजुर्लक्षणाधिकरणम्

### शेषे यजुः शब्दः ॥ २. १. ३७. ॥

(विषयसंशयौ)

अथ यजुषां किं लक्षणमितीदानीमनुप्रसङ्गेन यजुःशब्दार्थो निरूप्यते ।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—न तावत् पादसम्बद्धो मन्त्रो यजुश्शब्दार्थः, तस्यर्क्छब्दार्थत्वात् । नापि गीयमानं, तस्य सामशब्दार्थत्वात् । एतद्व्यतिरिक्तस्य च लक्षणस्य सकलयजुश्शब्दार्थव्यापकस्याप्रतीतेरनेकार्थत्वमेव यजुःशब्दस्येति । एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यद्युक्तक्सामव्यतिरिक्तत्वमेव यजुर्लक्षणं न भवेत्। तेनैतदेव यजुर्लक्षणम्—यत्र पादबद्धं न च गीयमानं तत् प्रश्लिष्टपठितं यजुरिति।

प्रयोजनं पूर्ववत्। सूत्रं सुबोधार्थमिति॥

इति त्रयोदशं यजुर्लक्षणाधिकरणम्॥ १३॥

अथ चतुर्दशं निगदाधिकरणम्

निगदो वा चतुर्थं स्याद्धर्मविशेषात्॥ २. १. ३८.॥

(विषयसंशयौ)

अथ निगदा नाम किं यजूंषि? उत यजुर्भ्योऽन्ये? इत्यृक्सामयजुःशब्दपदार्थेषु निरूपितेषु निगदानामनुप्रसङ्गेनैव "उच्चैर्निगदेन" इत्येवमादिवेदवाक्यगतनिगदपदार्थो निरूप्यते।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—"उपांशु यजुषा" इति यजुषामुपांशुधर्मशालित्वं प्रतीयते। अस्य च "उच्चैर्निगदेन" इति विशेषः श्रूयते। स चास्य यजुष्ट्वे नोपपद्यते, विध्यनुवादयोरस-

म्भवात् । विधित्वे सति "उपांशु यजुषा" इति सामान्यशास्त्रप्राप्तमुपांशुत्वम् "उच्चैर्निगदेन" इति विशेषशास्त्रेण बाधनीयम् । बाधश्च गत्यन्तरासम्भवे भवेत् । तेन 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र कौण्डिन्यगतब्राह्मणत्वस्य प्रमाणान्तरसिद्धत्वाद्भवतु गत्यन्तरासम्भवेन बाधः, यजुष्ट्वस्य प्रमाणान्तरसिद्धत्वात् 'शेषे यजुश्शब्दः' इति लक्षणस्यक्सामनिगदशेषपरत्वेनापि सम्भवात्त्रिभ्योऽन्यत्वेनैवोपपत्तेर्न बाधसम्भवः । न च यजुष्ट्वेऽपि परसम्बोधरूपत्वेन निगदानामर्थप्राप्तमुच्चैष्ट्वम् "उच्चैर्निगदेन" इत्यनूद्यते। यजुष्ट्वे सति वाचनिकेनोपांशुत्वेनार्थप्राप्तस्योच्चैष्ट्वस्य बाधितत्वादनुवादासम्भवात् । किञ्च व्यपदेशभेदश्चाप्यभियुक्तानां दृश्यते— 'निगदा वर्तन्ते न यजूंषि, अथ यजूंषि न निगदा' इति । अतो न यजूंषि निगदाः, किन्तु चतुर्थमेव निगदा इति मन्त्रजातमिति । एवं प्राप्ते अभिधीयते—

यजूंषि वा तद्रूपत्वात् ॥ २. १. ४०. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि "उच्चैर्निगदेन" इत्यत्रानुवादो न सम्भवेत् । न च यजुष्ट्वे सत्यर्थप्राप्तमुच्चैष्ट्वमुपांशुत्वविधिना बाधितत्वान्नानूद्यत इति वाच्यम्, उपांशुत्वविधे-

निगदेषु प्रवृत्त्यसम्भवात् । तथाहि—"अग्नीदग्नीन् विहर बर्हिस्तृणाहि" इत्येवंरूपा हि निगदाः । ते च परसम्बोधनार्थत्वेन प्रयोगेषूच्चार्यमाणेषु स्वकार्यक्षमा भवन्ति । अवयवव्युत्पत्तेश्च नितरां गद्यन्त इति निगदाः । न चोपांशुत्वेनोच्चार्यमाणास्तथा भवन्ति । न चोपांशुविधेरप्यनन्यगतिः, तद्व्यतिरिक्तयजुर्विषयत्वेनैव चरितार्थत्वात् । अतोऽयमुपांशुविधिर्निगदेतरयजुर्विषय एवेति न तेन बाधितत्वादुच्चैस्त्वस्य सम्भवः । "अहे बुध्निय मन्त्रं मे गोपाय, यमृषयस्त्रैविदा विदुः ऋचः सामानि यजूंषि" इत्यृचो यजूंषि सामानीत्येवमात्मके वेदे त्रिष्वेवर्ग्यजुस्सामसु मन्त्रत्वमुपपन्नं भवति । निगदा अपि मन्त्रा एव । अतो ऽपादबद्धत्वादगीतित्वाच्च परिशेषसिद्धयजुर्लक्षणयोगाद्यजूंष्येव निगदाः । उच्चैष्ट्वधर्मभेदश्चास्य परसम्बोधनकार्यसामर्थ्यप्राप्त एव स्तुत्यर्थमनूद्यमानोऽनन्यत्वमापादयति । उपदेशभेदश्च ब्राह्मणपरिव्राजकन्यायेन धर्मभेदनिबन्धन एव । अतो यजूंष्येव निगदा इति । अत्र यद्यपि "वेदो वा प्रायदर्शनात्" (जै. सू., ३. ३. २.) इत्यत्रोपांशुत्वादीनां वेदधर्मत्वमापद्यते न जातधर्मत्वं, तथापि तदीयपूर्वपक्षन्यायेन जातधर्मत्वमभ्युपगम्य सामान्यशास्त्रमयोग्यं विशेषविषये न प्रवर्तत एवेति तत्प्रतिपादनार्थोऽयं विचारः । तेनायमेव सामान्यविशेषन्यायादस्य भेदो यत्सामान्यशास्त्रं प्रवृत्तियोग्यमपि विशेषशास्त्रदर्श-

नाम प्रवर्तते। अत्र तु सामान्यशास्त्रं विशेषप्रवृत्त्ययोग्यत्वादेव न प्रवर्तेत इति।

प्रयोजनम्—यजुष्ट्वे सति यजुर्भ्रंशनिमित्तं "भुवः स्वाहा" इति प्रायश्चित्तम्, अयजुष्ट्वे नेति।

सूत्रन्तु यजूंष्येव निगदाः। तद्रूपत्वात् प्रश्लिष्टपठितत्वेन यजूरूपत्वादित्यर्थः॥

इति चतुर्दशं निगदाधिकरणम् ॥ १४ ॥

अथ पञ्चदशमेकवाक्यलक्षणाधिकरणम्

अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥

॥ २. १. ४६. ॥

(विषयसंशयौ)

अथ प्रश्लिष्टपठितेषु यजुःषु कथमवगम्यते इयदेकं यजुरिति। मन्त्रत्रैविध्ये निरूपिते कियानेको मन्त्र इत्याकांक्षायां ऋक्सामयोः परिमाणस्याध्येतृपरम्परासिद्धत्वात्प्रश्लिष्टपठितेषु यजुःषु कियदेकं यजुरित्याकांक्षायां तत्परिमाणलक्षणं क्रियते।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—न तावदर्थैकत्वादेकं

वाक्यम्, तथा सति प्रतिपदमर्थभेदेन वाक्यभेदप्रसङ्गात् । नापि विभज्यमानसाकांक्षत्वम्, एवञ्च सति "स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि" (तै. ब्रा., ३. ७. ५.) इत्यस्य "तस्मिन्सीद" इत्यनेन सहैकवाक्यत्वप्रसङ्गात् । नापि मिलितमेकवाक्यत्वलक्षणम्, एकं हि पदमेकार्थं न तद्विभज्यमानसाकांक्षम् । तच्चानेकार्थं प्रतिपदमर्थभेदेनैकार्थ्याभावात् । तदुक्तम्—

एकार्थत्वं पदस्य स्यात्साकांक्षावयवं न तत् ।
साकांक्षावयवः सङ्घस्तस्यैकोऽर्थो न विद्यते ॥ इति ।

(तं. वा., पृ. ४४६)

अतो "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि" इत्येवमादियजुषामपि नियतोपायाधीनमेव परिमाणपरिज्ञानमिति । एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यद्यभिधेयवचनोऽयमर्थशब्दो भवेत् । प्रयोजनवचनस्त्वयम् । तेन यावन्ति पदान्येकप्रयोजनानि विभागे च साकांक्षाणि तावन्त्येकं वाक्यम् । तेनार्थैकत्वं विभज्यमानसाकांक्षत्वञ्च मिलितमेवेदमेकवाक्यत्वलक्षणम् । अतो न प्रतिपदमेकं वाक्यम् । प्रतिपदमभिधेयभूतार्थनानात्वेऽपि "देवस्य त्वा" इत्येवमादिषु प्रयोजनभूतस्यार्थस्यैकत्वादेकयजुष्ट्वमेव । "स्योनं ते सदनं कृणोमि" इत्य-

स्य "तस्मिन्सीद" इत्यनेन सहैकवाक्यत्वं विभज्यमानसाकांक्षत्वेऽपि सदनकरणपुरोडाशप्रतिष्ठापनरूपप्रयोजनभेदात् । तथा "भगो वां विभजतु,अर्यमा वां विभजतु" इत्येवमादिषु पुरोडाशविभागरूपैक-कार्यत्वेऽपि विभज्यमानसाकांक्षत्वाभावान्नैकवाक्यत्वम् । एतच्च न केवलं यजुर्मन्त्रमात्रविषयं लक्षणम्, किन्तु ब्राह्मणवाक्यलौकिक-वाक्ययोरपीति । तदुक्तम्—

तस्मात्पदेषु यावत्सु श्रूयमाणेषु दृश्यते ।
विस्पष्टमैक्यमर्थस्य तावतामेकवाक्यता ॥ इति ।

(तं. वा., पृ. ४४५)

प्रयोजनम्—पूर्ववत्प्रतिपत्तिलाघवमेव । सूत्रन्तु सुबोधमेवेति ॥

इति पञ्चदशमेकवाक्यलक्षणाधिकरणम् ॥ १५ ॥

## अथ षोडशं वाक्यभेदाधिकरणम्

### समेषु वाक्यभेदः स्यात् ॥ २. १. ४७. ॥

(विषयसंशयसङ्गतयः)

"इषे त्वोर्जे त्वा" (तै. सं., १.१.१) इति, "आयुर्यज्ञेन कल्पतां प्राणो यज्ञेनकल्पताम्"(तै. सं., १.७.६.) इत्यादि । तत्र संशयः— किमेवमादिषु भिन्नं वाक्यम् ? उतैकम् ? इति । पूर्वं यजुषामेवैक-वाक्यत्वे प्रतिपादिते सतीदानीं क्वचिद्विषयविशेषेऽपवादः क्रियते ।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—न तावत् "इषे त्वोर्जे त्वा वायवस्थ" इत्यादिषु प्रत्येकं समवेतक्रियाभिधायकमत्र पदं श्रूयते। नापि कल्पयितुमपि शक्यते, विनिगमनाप्रमाणाभावात्। तेनात्र समवेतार्थाभिधानाभावेनाविवक्षितार्थतया उच्चारणमात्रैकादृष्टप्रयोजनतया एकवाक्यत्वं वक्तव्यम्, न तु संहत्यैकार्थाभिधायकत्वेन, अविवक्षितार्थेषु तल्लक्षणासम्भवात्। कल्प्यमानश्चादृष्टं लाघवादेकमेव कल्पयितुमुचितम्। तथा च सत्येकादृष्टप्रयोजनत्वेन विभज्यमानसाकांक्षत्वमप्यस्तीति मिलितानामेवैकवाक्यत्वम्। ननु "इषे त्वेति छिनत्ति ऊर्जे त्वेति अनुमार्ष्टि" इत्यादिविनियोगभेदादृष्टरूपप्रयोजनभेदेन वाक्यभेद एव प्रतीयते। नैवम्; मन्त्रस्य ह्येकवाक्यत्वमालोच्यते। न च मन्त्रे छेदनानुमार्जनाभिधायकं पदं श्रूयते। तेनादृष्टार्थत्वे सति कृत्स्नस्यैव मन्त्रस्यादिमध्यान्तप्रतीकद्वारेण पुनः पुनर्विनियोगभेदो नानुपपन्नः। न चैवं सत्येकवाक्यत्वे छेदनानुमार्जनादिरूपविषयभेदाददृष्टभेद एवेति वक्तव्यम्। एकस्यैवादृष्टस्य छेदनानुमार्जनादिविषयानुकूलज्ञापनार्थत्वेनैव विनियोगभेदोपपत्तेः। क्लृप्त्युदाहरणेऽपि यद्यपि कल्पतां कल्पतामित्याख्यातपदमस्ति, तथापि तदर्थस्य कर्मासमवेतत्वेनादृष्टार्थत्वमेव वक्तव्यम्। तथा सति लाघवात् पूर्ववदेवादृष्टप्रयोजनत्वेन विभज्यमानसाकांक्ष-

त्वेन चैकवाक्यत्वमेव । न च "क्लृप्तीर्यजमानं वाचयति" इति बहुवचनानुपपत्तिः । मन्त्रैकत्वेऽपि कल्पतामिति पुनः पुनरुच्चरित-क्लृप्तिशब्दवत्वेनैवोपपत्तेः । तदुक्तम्—

एकोऽपि बहुभिर्मन्त्रः प्रतीकैर्विनियुज्यते ।
पुनःपुनः प्रयोगाच्च क्लृप्तीरित्यभिधीयते ॥ इति ।

(तं. वा., पृ. ४४६)

अतः प्रतीयमानकर्मसमवेतार्थानां यजुषां दृष्टार्थमन्त्रावधितः प्रागेकमन्त्रत्वमेवेति । एवंप्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि मन्त्ररूपावधारणात् प्रागेवादृष्टरूप-प्रयोजनकल्पनं भवेत् । न चैतदस्ति; अज्ञातस्वरूपस्य विनियोगाभावात् । अविनियुक्तस्य च प्रयोजनकल्पनानुपपत्तेः । तेन विनियोग-प्रयोजनकल्पनातः प्रागेव मन्त्रस्य स्वरूपं निरूपणीयम् । तच्च भिन्नमेव प्रतीयते । तथाहि—"इषे त्वा" इति कर्माभिधायिद्वितीयान्तशब्दप्रयोगात् कर्मणश्च क्रियासम्बन्धाव्यभिचारात् लिङ्गा-देवैतदवगम्यते—इषे ईप्सिताय त्वां किञ्चित्करोति, एवमूर्जे बलाय त्वां किञ्चित् करोतीत्येतावतैव भेदबुद्धौ जातायां भेदेनैव प्रयोजनविशेषाकांक्षायां विनियोगगवेषणे भेदेनैव "इषे त्वेति शाखां छिनत्ति, ऊर्जे त्वेति अनुमार्ष्टि" इति विनियोगदर्शनात् । प्रयो-

जनकल्पनमपि भेदेनैव । अदृष्टार्थत्वेऽप्यदृष्टप्रयोजनभेदात् विभज्यमानसाकांक्षत्वाभावाच्च नैकवाक्यत्वम्, किन्तु वाक्यभेद एवेति । तदुक्तम्—

रूपादुत्तरकालं हि विनियोगप्रयोजने ।
तस्मात्प्रागेव तत्क्लृप्तेर्भेदाभेदपरीक्षणम् ॥ इति ।

(तं. वा., पृ. ४५०)

तेनादृष्टार्थत्वेऽपि तावन्नैकवाक्यत्वम् । वस्तुतस्तु नैषामदृष्टार्थत्वम्, किन्तु ब्राह्मणवाक्यबोधितदृष्टप्रयोजनत्वमेव । यत्तु ब्राह्मणबोधितछेदनाद्यभिधायिपदाभावान्न मन्त्रस्य तत्र सामर्थ्यमस्तीत्युक्तम् । तदयुक्तम्; विनियोगबलेनैव तद्वाचकपदाध्याहारेण छेदनादिप्रकाशरूपदृष्टकार्योपपत्तेरित्येवं क्लृप्त्युदाहरणे यद्यप्यर्थैकत्वं तथापि विभज्यमानसाकांक्षत्वाभावान्नैकवाक्यत्वं, नाप्येकार्थत्वम्, "क्लृप्तीर्यजमानं वाचयति" इति शब्दस्य पुनः पुनरुच्चार्यमाणत्वात् । क्लृप्तिशब्दबहुत्वाभिप्रायश्च बहुवचनम्, शब्दानामर्थतन्त्रत्वस्य स्वभावसिद्धत्वात् । अतोऽर्थभेदादपि भिन्नवाक्यत्वमेवेति । अत्र यद्यप्यायुराशासनरूपाणां क्लृप्तीनामदृष्टार्थत्वम्, तथापि मन्त्राणां तत्प्रकाशने दृष्टार्थत्वमेवेति ।

प्रयोजनम्—पूर्वपक्षे "इषे त्वोर्जे त्वा" इत्यादिषु छेदने मार्जने च कृत्स्नमन्त्रप्रयोगः । सिद्धान्ते तु भेदेनैव । क्लृप्तिमन्त्रे

च पूर्वपक्षे मन्त्रस्यैव वाक्यत्वान्मन्त्रदोषे कृत्स्नमन्त्रावृत्तिः। सिद्धान्ते तु मन्त्रभेदे य एव दुष्टः स एवावर्तयितव्यो नान्य इति ॥

इति षोडशं वाक्यभेदाधिकरणम् ॥१६॥

## अथ सप्तदशमनुषङ्गाधिकरणम्

### अनुषङ्गो वाक्यसमाप्तिस्सर्वेषु तुल्ययोगित्वात् ॥२.१.४८

(विषयसंशयौ)

"या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपवाधीत्स्वाहा। या ते अग्ने रजाशया, या ते अग्ने हराशया" (वा. सं., ५. ८. ८) इति। तत्र सन्देहः— किं "तनूर्वर्षिष्ठा" इति सर्वत्रानुषक्तव्यः आहोस्विल्लौकिको वाक्यशेषः कर्तव्य इति। अत्रैषा विषयशुद्धिः—ज्योतिष्टोमे "तिस्र एव साह्नस्योपसदः कार्या" इत्युपसन्नामानि त्रीणि कर्माणि श्रूयन्ते। तेषां चाङ्गभूतास्तिस्र इष्टयोऽग्निदैवत्या "अग्निमनीकम्" इत्येवमादिवाक्यविहिताः सन्ति। आसाञ्च क्रमे त्रयो मन्त्राः समाम्नाताः। तत्र प्रथमाया इष्टेः "या ते अग्नेऽयाशया" इत्ययं मन्त्रस्सम्पूर्णत्वान्निराकांक्षः। द्वितीयायास्तृतीयायाश्चेष्टेः "या ते अग्ने रजाशया या ते अग्ने हराशया" इत्येतावदसम्पूर्णत्वात्साकांक्षौ।

तत्रायं सन्देहः—किं प्रथममन्त्रसमाम्नातस्य "तनूर्वर्षिष्ठा" इत्यादिवाक्यशेषस्य द्वितीयतृतीयमन्त्रयोरनुषङ्गः, अथवा लौकिकस्याध्याहार इति। पूर्वमनुप्रसङ्गेन यजुःपरिमाणे निरूपिते सतीदानीमनुप्रसङ्गेनैवासम्पूर्णस्य यजुषः किमध्याहारेण पूरणम्? उतानुषङ्गेणेति।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—न तावत् "या ते अग्नेऽयाशया" इत्येतच्छेषभूतस्य "तनूर्वर्षिष्ठा" इत्यादेः "या ते अग्नेऽयाशया या ते अग्ने हराशया" इत्येतच्छेषभावस्सम्भवति, पूर्ववाक्यशेषत्वेनैवाध्ययनविधिनाध्यापितत्वात्। यथा आहवनीयस्य होमशेषत्वात् वेदावगतस्य "अग्निमुपनिधाय स्तुवीत" इत्यत्र न स्तोत्रशेषत्वेनोपनिधानम् किन्तर्हि? लौकिकस्यैवाग्नेः सर्वार्थस्य, तथा लौकिकस्यैव वाक्यशेषस्योत्तरमन्त्रयोरध्याहार इति। तदुक्तम्—

> नान्यत्रोत्सहते गन्तुं वैदिकं सन्निबन्धनम्।
> यथेष्टविनियोगन्तु सर्वार्थं वस्तु लौकिकम्॥ इति।
>
> (तं. वा., पृ. ४५३)

तस्मान्न वैदिकः शेषः, किन्तु लौकिक एवेति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि वाक्यगताकांक्षा सति सम्भवे

अवैदिकेनापि पूर्येत । तथाहि—वैदिकस्य वाक्यस्य वैदिक एव शेषः पूरणात्तमः । तत्र वेदगतैवान्वेषणोचिता । तदुक्तम्—

अदृष्टः प्रकृतावर्थः प्रत्ययेऽन्विष्यते पुनः ।
पदे स्वस्मिन्न लब्धश्चेत्प्रार्थनीयः पदान्तरे ॥
स्वस्मिन् वाक्येऽपि न स्याच्चेन्मृग्यः प्रकरणे ततः ।
यदि प्रकरणे न स्यान्मृग्यः प्रकरणान्तरे ॥ इति ।

(तं. वा., पृ. ४५३)

चोदनालक्षणधर्मनियमादिह तु वैदिकस्यैव तनूवर्षिष्ठेत्यादेः सर्वार्थत्वसम्भवान्न लौकिकावसरः स्थितः । तदुक्तम्—

विमुक्तव्यापृतौ वेदे लौकिकावसरस्थितिः ।
तद्वथापारविमोकश्च सकलान्वेषणक्षये ॥ इति ।

(तं. वा., पृ. ४५३)

यत्तु वाक्यान्तरशेषत्वेनाध्ययनविधिनाध्यापितस्य न वाक्यान्तरशेषत्वं सम्भवतीत्युक्तम्, तदयुक्तम्; सर्वशेषत्वेनैकस्यैव वाक्यशेषस्याध्ययनविधिनाध्यापितत्वात् । न चानन्तर्यविशेषाध्ययनवशेनापि पूर्ववाक्यशेषत्वमेवास्योन्नेतुमुचितम्, न तु सर्वशेषत्वमिति वाच्यम् । यत आकाङ्क्षायोग्यतासन्निधयो हि सम्बन्धादिकारणम् । सन्निधिश्च बुद्धिविपरिवृत्तिर्नार्थान्तरम् । ते चाकाङ्क्षादयस्त्रिष्वेव मन्त्रेष्वविशिष्टा इति सर्वार्थत्वमेवाम्नानस्य । सर्वथा-

म्नानस्यावश्यकेनाप्यानन्तर्येण भवितव्यमिति नान्तरीयकमानन्तर्यविशेषोपादानम् । तदुक्तम्—

आकांक्षा सन्निधानं च योग्यता चेति तत्त्रयम् ।
सम्बन्धकारणत्वेन क्लृप्तं नानन्तरश्रुतिः ॥ इति ।

(तं. वा., पृ. ४५५)

न च रजाशयेत्यनेन व्यवधानाद्धराशयेत्यनेन सह न सम्बन्धः । सम्बन्धिपदव्यवहितस्याप्यनन्तरितत्वादेव ।

अनन्तरेण सम्बन्धः स्यात्परस्याप्यनन्तरः ।
ततः पुनस्तदारूढः परानन्तर्यमश्नुते ॥ इति ।

(तं. वा., पृ. ४५५)

प्रयोजनम्—पूर्वपक्षे लौकिकाध्याहृतपदस्यामन्त्रत्वान्न मन्त्रनाशनिमित्तं प्रायश्चित्तम् । सिद्धान्ते त्वनुषक्तपदानां मन्त्रत्वान्मन्त्रनाशनिमित्तं प्रायश्चित्तमिति ।

सूत्रन्तु—अनुषज्यत इत्यनुषङ्गो वाक्यशेषः वाक्यपरिसमाप्तिरनेनेति सैव वाक्यपरिसमाप्तिः । सर्वेषु तुल्ययोगित्वात्तुल्यसम्बन्धादित्यर्थः ।

अथेह कथं भवितव्यम् ? यत्र निराकांक्षाणां सन्निधौ परिपूर्णसम्बन्धः श्रूयते । यथा “चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य

रश्मिभिः" इति। पूर्वं साकांक्षेषु शेषिषु प्रतीयमानाकांक्षस्य शेषस्यानुषङ्गं प्रतिपाद्य, इदानीमप्रतीयमानाकांक्षेषु शेषिषु साकांक्षस्य शेषस्यानेनैव सूत्रेणानुषङ्गः प्रतिपाद्यते।

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—शेषिणस्तावन्निराकांक्षा-नन्तरशेषिसम्बन्धेनैव पूरिताः। अतो नात्रानुषङ्गकारणमस्ति। तदुक्तम्—

अनन्तरेण सम्बध्य शेषस्य च कृतार्थता।
शेषिणश्च निराकांक्षाः किं निमित्तानुषङ्गधीः॥ इति।

(तं. वा., पृ. ४५७)

तेन 'देवस्त्वा सविता पुनातु' इत्यनेनैवानन्तरितेन सहाच्छिद्रेण पवित्रेणेत्यस्य वाक्यशेषस्य सम्बन्धः, न तु "चित्पतिस्त्वा पुनातु" इत्येताभ्यामपीति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि "देवस्त्वा सविता पुनातु" इत्येतस्यैव वाक्यस्याच्छिद्रेणेत्ययं शेषो भवेत्। किन्तु करणत्वेन क्रियासाकांक्षमनन्तरपठितया पुनातिक्रियया सम्बध्यते। सा च त्रिष्वपि वाक्येषु एकैवेति युगपदेवास्य मन्त्रत्रयशेषत्वम्। न चैकत्वेऽपि क्रियायाः कर्तृभेदेन भिन्नत्वादनन्तरितसवितृकर्तृकपुनातिक्रियासम्बन्ध एवास्योचित इति। स्यादेवं यदि सवित्रादिकर्तृभेदोऽस्य

वास्तवो भवेत्। किन्तु दर्भयुगलेन पूर्वाग्रतया आज्योत्पवने एकेनाध्वर्युणा क्रियमाणो मन्त्रोऽयं पठ्यते। तत्र चैक एवाध्वर्युः परमार्थतः कर्ता, चित्पत्याद्युपन्यासः स्तुत्यर्थ एवेति न कर्तृभेदात् पुनात्वर्थभेदः। तदुक्तम्—

अनन्तरस्य वाक्यस्य यदि शेषो भवेदयम्।
तत एवं भवेदेष त्वाख्यातार्थेन सर्वभाक्॥ इति।

( तं. वा., पृ. ५५७ )

न चैवं सति प्रकरणान्तरीयपुनात्वर्थेनास्य सम्बन्धः शङ्कनीयः, प्रकृतापूर्वगृहीतत्वेनास्य दर्शपूर्णमासबर्हिर्धर्मवदन्यसम्बन्धासम्भवात्। न चाभेदेऽपि ज्योतिष्टोमस्य यथा "मैत्रावरुणं श्रीणाति" इत्यभ्यासापूर्वभेदादेव श्रयणव्यवस्था, तथात्रापि पुनात्वर्थस्यैकत्वेऽपि भिन्नापूर्वाभ्यासवशेनैव व्यवस्थेति वाच्यम्। तत्र भिन्नाभ्यासापूर्वप्रयुक्तत्वेन धर्मव्यवस्थोपपत्तेः। न चात्र तथेति वैषम्यम्। नाप्येकक्रियान्वयित्वेन चित्पत्यादिकर्तॄणामपि सर्वशेषत्वम्, कर्त्रन्तरावरुद्धत्वेन कर्त्रन्तरप्रवेशासम्भवात्। तदुक्तम्—

करणानां व्यवस्था हि भिन्नापूर्वप्रयुक्तितः।
कर्त्रन्तरावरोधाच्च चित्पत्यादेरसङ्करः॥ इति।

( तं. वा., पृ. ५५८ )

अतः सर्वशेषत्वमेव वाक्यस्येति सिद्धम् ।

प्रयोजनं पूर्वाधिकरणवदेव । सूत्रन्तु व्याख्यातमेव ॥

इति सप्तदशमनुषङ्गाधिकरणम् ॥ १७ ॥

अथाष्टादशं व्यवायाधिकरणम्

व्यवायान्नानुषज्येत ॥ २. १. ४९ ॥

( विषयसंशयसङ्गतयः )

"सन्ते वायुर्वातेन गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा" इति । सन्निधिप्रत्युदाहरणसूत्रमिदम् । बुद्धिविपरिवृत्तिर्हि सन्निधिरित्युक्तम् । अत्र तु "सन्ते वायुर्वातेन गच्छताम्" इत्येकवचनान्तस्याख्यातपदस्य "संयजत्रैरङ्गानि" इत्यनेन बहुवचनान्तेनायोग्यतयान्वयासम्भवादवश्यं बहुवचनान्तं गच्छन्तामिति लौकिकपदमध्याहर्तव्यम् । तेन विजातीयेन बुद्धिविच्छेदे सति बुद्धिविपरिवृत्तिरूपसन्निध्यभावादाकांक्षायोग्यतयोर्विद्यमानत्वेऽपि "संयज्ञपतिराशिषा" इत्यत्र गच्छतामित्यस्य नानुषङ्गः । तदुक्तम्—

प्रत्युदाहरणत्वेन सन्निधेरिदमुच्यते ।
असम्बन्धातिरोधाने वैषम्यान्नानुषज्यते ॥ इति ॥

( तं. वा., पृ. ४५६ )

तेनात्र लौकिक एव शेषोऽध्याहर्तव्यः । प्रयोजनं पूर्वमेवोक्तम् ।
आम्नायमानं ह्यनुषज्यमानमन्तर्गतं मन्त्रनिरूपणायाम् ।
तदादिसाम्येन तु लौकिकानां न मन्त्ररूपप्रतिपत्तिसिद्धिः ॥
इति रिति । सूत्रन्तु व्यक्तमेवेति ।

इत्यष्टादशं व्यवायाधिकरणम् ॥ १८ ॥

इति बालबलभीभुजङ्गापरनाम्नो भट्टभवदेवस्य कृतौ
तौतातितमततिलके
द्वितीयस्याध्यायस्य प्रथमः पादः ॥

श्रीः

# द्वितीयाध्यायस्य द्वितीयः पादः

## तत्र प्रथमं शब्दान्तराधिकरणम्

### शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ २. २. १. ॥

( विषयसंशयौ )

अस्ति ज्योतिष्टोमः । तत्र श्रूयते—"सोमेन यजेत" "दाक्षिणानि जुहोति" "हिरण्यमात्रेयाय ददाति" इति । यजतिददातिजुहोतयः किं संहत्य कार्यं कुर्वन्ति ? उत विहृत्येति ।

( प्रभाकरमतेन विषयसङ्गती )

तत्र प्रभाकरेण शास्त्रभेदोऽध्यायार्थ इति दर्शितम् । अयश्च तस्याभिप्रायः—प्रथमाध्याये शास्त्रत्वेन चोदनाप्रामाण्ये निरूपिते तदेव शास्त्रं कुत्र भिन्नं कुत्र चाभिन्नमितीयमेव चिन्तानन्तराङ्गत्वेनोचिता, न तु कर्मभेदगोचरा, तस्य शास्त्रभेदफलत्वेनार्थसिद्धत्वात् । किञ्च—उक्तप्रामाण्यनिर्वाहकोऽपि शास्त्रभेद एव, अन्यथैकशास्त्रत्वेन सर्वचोदनानामशक्यानुष्ठानार्थतयाप्रामाण्यप्रसङ्गात् ।

स च शास्त्रभेदः क्वचित्साध्यभेदनिबन्धनः, क्वचिच्चानुबन्धभेदनिबन्धनः । तौ चात्रानिरूपितभेदाभेदादेव शास्त्रादवगतौ

शास्त्रभेदकौ। साध्यभेदस्तावदुत्पत्ति-प्राप्ति-विकृति-संस्कृति-करणोपकार-करणावान्तरकार्यै-श्वर्यलक्षणाधिकाररूपभेदात्सप्तविधः। शास्त्रत्वञ्चासन्निकृष्टार्थविषयत्वम्। तद्यत्र निरपेक्षभिन्नासन्निकृष्टार्थतात्पर्यवत्त्वं, तत्र शास्त्रभेदः। यत्र तु नैवम्, तत्राभेद एव। यथा—"पुरोडाशं संयौति" इत्यस्य पुरोडाशोत्पत्तिशास्त्रस्य "पुरोडाशं चतुर्धा करोति" इति चतुर्धाकरणशास्त्राद्भेदः। अनयोरेव निरपेक्षासन्निकृष्टार्थतात्पर्यवत्त्वात्। "आग्नेयोऽष्टाकपालो भवति" इति शास्त्रात्पुनरभेद एव, तत्सापेक्षपुरोडाशोत्पत्तितात्पर्यवत्त्वात्। एवं "पयो दोग्धि" इति पयःप्राप्तिशास्त्रस्य पयस्संस्कारशास्त्राद्भेद एव। अभेदश्च "ऐन्द्रं पयः" इत्यस्मात्सान्नाय्यशास्त्रात्। एवं "व्रीहीनवहन्ति" इति व्रीहिविकृतिशास्त्रस्य "व्रीहीन्याहरति" इत्यस्माद्भेदः। अभेदश्च "व्रीहिभिर्यजेत" इत्यस्मात्प्रधानशास्त्रात्। एवं "व्रीहीन् प्रोक्षति" इत्यस्यापि संस्कृतिशास्त्रस्यावहन्तिशास्त्राद्भेदः। "व्रीहिभिर्यजेत" इति प्रधानशास्त्रात्त्वभेदः। तथा "समिधो यजति" इत्यादीनामितिकर्तव्यताशास्त्राणां करणोपकाररूपसाध्यतात्पर्यवत्वेन "आग्नेयोऽष्टाकपालो भवति" इत्यादिशास्त्राणाञ्च करणावान्तरकार्यतात्पर्ययोगित्वेन परस्परं भेदः। अभेदश्च "दर्शपूर्णमासाभ्यां यजेत" इत्यस्मादधिकारशास्त्रात्, तत्सापेक्षत्वात्सकलेतिकर्त्तव्यताशास्त्राणां करण-

शास्त्राणाञ्च । तथा जीवनाधिकारसाध्यभेदे च "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यनयोश्शास्त्रयोर्भेदः । तथानुबन्धभेदादपि शास्त्रभेदः । अनुबन्धत्वं नियोगविषयत्वम् । तद्भेदश्च शब्दान्तराभ्याससंज्ञागुणप्रकरणान्तरैः पञ्चभिः प्रतिपाद्यमानः पञ्चविध एव । संख्यायास्त्वनुबन्धभेदकत्वाभावान्न शास्त्रभेदकत्वम्, किन्तु धात्वर्थमात्रभेदकतया प्रसङ्गेनोपन्यास इति । तदुक्तं शालिकेन--

अध्यायेन द्वितीयेन गुरुर्भाष्यनिबन्धने ।
साध्यानुबन्धभेदाभ्यां शास्त्रभेदमवर्णयत् ।। इति ।

सूत्रञ्च--शब्दान्तरे कर्मभेदोऽपूर्वभेदः शास्त्रान्तरञ्च कृतानुबन्धत्वादिति ।

( प्रभाकरमतखण्डनम् )

तदयुक्तम्; साध्यानुबन्धभेदस्यैव शास्त्रभेदावगममन्तरेण प्रत्येतुमशक्यत्वात् । तथाहि—असन्निकृष्टार्थतात्पर्यवत्त्वं शास्त्रत्वम्, तन्निरपेक्षभिन्नासन्निकृष्टार्थतात्पर्यवत्त्वञ्च तद्भेदः । न चैवम्भूततात्पर्यावधारणमन्तरेण शब्दात्साध्यभेदोऽवगन्तुं शक्यते । तच्चेद्भिन्नतात्पर्यवत्त्वमग्रत एवावगतं, तदा शास्त्रभेदोऽप्यवगत एवेति न साध्यानुबन्धभेदाभ्यां शास्त्रभेदोऽवगम्यः । अतो यदुक्तम्—

अनवधारितभेदाभेदादेव शास्त्रादवगतः साध्यानुबन्धभेदः शास्त्रं भिनत्तीति, तदप्यसारम्; तात्पर्यभेदावधारणमन्तरेण शब्दार्थभेदावधारणासम्भवात्। तेन शास्त्रभेदावगमनिबन्धन एव साध्यानुबन्धभेदावगमोऽवश्यं वक्तव्यः। तद्यदि शास्त्रभेदावगमोऽपि साध्यानुबन्धभेदावगमाधीनः, तदा दुर्निवारमितरेतराश्रयम्। अथ तर्कोपस्थापितसाध्यानुबन्धभेदः शास्त्रभेदहेतुरित्युच्यते, स किं तर्कः सन्देहरूपः? निर्णयरूपो वा? तद्यदि सन्देहरूपः, तदा सन्दिग्धनिमित्तकः शास्त्रभेदोऽपि सन्दिग्ध एव। अथ निर्णयरूपः, तदा निर्णीतसाध्यानुबन्धप्रतिपादकतया शास्त्रस्यासन्निकृष्टार्थतात्पर्याभावान्नासन्निकृष्टार्थतात्पर्यवत्त्वरूपं शास्त्रत्वमिति।

किञ्च प्रधानीभूताधिकारशास्त्रादभिन्नेनाङ्गशास्त्रेण स्वार्थोऽपि प्रधानशास्त्रार्थादभिन्न एव प्रतिपादनीयः। तथा सत्यङ्गप्रधानकर्मणोरन्योन्यसङ्कीर्णत्वात् भिन्नरूपावगतिः कुतः? न तावत्तस्मादेव शास्त्रात्, अङ्गशास्त्रस्याभिन्नत्वेन भिन्नकार्यप्रतिपादनतात्पर्याभावात्। अत एव न शास्त्रभेदादर्थादपि कर्मभेदसिद्धिः, अङ्गशास्त्राणां प्रधानशास्त्राभेदात्। न च वैदिककर्मभेदावगमे प्रमाणान्तरं क्रमते। अथ क्रमते, तदा सापेक्षत्वादप्रामाण्यमेव प्रसज्यत इत्यलमुन्मत्तप्रलपितदूषणेनेति यथावार्तिकमेवाध्यायार्थोऽनुसन्धीयते।

( वार्तिककारमतेन सङ्गतिः )

अत्रापूर्वभेदानुबन्धिकर्मभेदेऽध्यायार्थे वक्तव्ये प्रथमपादे तदुपोद्धातभूतसपरिकरभावार्थविचारात्मसक्तानुप्रसक्तानि निरूप्येदानीं शब्दान्तरादिसहायोत्पत्तिविधिव्यापाराधीनोऽध्यायार्थभूतः कर्मभेद एव कृतः। तदुक्तम्—

उपोद्धातप्रसक्तानुप्रसक्तादौ गतेऽधुना।
शब्दान्तरादिभिर्भेदो लक्षणार्थोऽभिधीयते॥ इति।

( तं. वा., पृ. ४६१ )

तत्र प्रथमं सुबोधत्वाच्छब्दान्तरनिबन्धनः कर्मभेदः प्रतिपाद्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—धात्वर्थावच्छिन्ना हि भावना कर्मशब्देनाभिधीयते। नासौ यजतिददातिजुहोतीत्यादिशब्दभेदाद्भिद्यते, एकस्या एव तस्याः प्रत्ययैक्येन नानाधात्वर्थानुरक्तायाः प्रत्यभिज्ञातत्वात्। ननु कथमेकस्यां भावनायां नानाधात्वर्थान्वयः? किं सम्भूय समुत्पादनेन? अनूद्य गुणविधानेन वा? न तावत्सम्भूयसमुत्पादस्सम्भवति। एकस्य प्रत्ययस्य धातुत्रयवर्तित्वाभावात्। एकस्माच्च धातोर्धात्वर्थत्रयानभिधानात्। नाप्यनूद्य गुणविधानेन; एकस्यां भावनायां नाना-

धात्वर्थान्वये उत्पत्तिशिष्टैकधात्वर्थावरुद्धायां धात्वर्थान्तरविधानानुपपत्तेः । एकेन चोत्पादितायामन्येन तदनुवादेन गुणो विधातव्यः। न चात्र केनोत्पादनं केनानुवाद इति विवेक्तुं शक्यम्। सर्वाख्यातानां तुल्यरूपत्वात् । अतो नानूद्य गुणविधानमपीति ।

उच्यते—नात्र सम्भूयसमुत्पादनं ब्रूमः, किन्त्वनूद्य गुणविधानमेव । न चोत्पत्तिशिष्टगुणावरोधाद्गुणान्तराविधानम्, त्रिष्वप्येतेषु एकप्रत्ययानुमानजनितैकभावनाप्रत्यभिज्ञाबलेन क्रयवाक्यवन्निष्कृष्टभावनानुवादेनैव धात्वर्थान्तरविधानोपपत्तेः । यथा "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" इत्येतद्वाक्योत्पन्नमेकहायन्यवरुद्धमपि क्रयं निष्कृष्टमनूद्य "वाससा क्रीणाति" इत्येवमादिभिर्वाक्यैर्वासःप्रभृतयः समुच्चयेन विधीयन्ते, तथेहापीति किमनुपपन्नम् । न च कुत्रोत्पाद्यते भावना कुत्रानूद्यत इति विनिगमनाप्रमाणाभावः, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति फलवाक्यनिरीक्षणेन "सोमेन यजेत" इत्यस्यैवोत्पादकत्वावधारणात् ।

यत्तु केनापि फलवाक्यस्यैवोत्पादकत्वमाश्रितम्, तदसम्बद्धम् ; एकस्य हि वाक्यस्य द्विपरत्वमगत्याङ्गीक्रियमाणं श्रुतार्थापत्तिकल्पितवाक्यान्तराश्रयणेन वाच्यम् । तच्च वाक्यं "सोमेन यजेत' इत्येवंरूपमेव कल्पनीयम् । न च प्रत्यक्षश्रुते तस्मिन् कल्पनावकाशोऽ-

स्तीति व्यामुग्धस्यैव तदभिधानमिति यत्किञ्चिदिति । अतः "सोमेन यजेत" इत्याख्यातोत्पादितामेव भावनामनूद्य ददातिजुहोतीत्यादिभिर्धात्वर्थान्तराणि विधीयन्त इति करणधात्वर्थानुरक्ता इन्द्रायुधरूपा एकैव भावनेति । एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवदेवं यदि यजत इति पदाद्भावनामात्रमवगम्येत, किन्तर्हि ? धात्वर्थान्तरान्वयायोग्यविशेषरूपेणैव भावनावगतिः । तथाहि—धात्वर्थनिष्पादना हि भावनेत्युच्यते । सैव चोद्दिष्टफलतया भावना भवति । सा च यज्यर्थान्वितैव प्रत्ययेनाभिधीयमाना यागभावनात्वेन विशेषरूपेणावगम्यते । न च सा होमोत्पादनरूपेणावगन्तुं शक्यते, प्रतीतिविरोधात् । तदुक्तम्—

धात्वर्थभेदे सर्वत्र विज्ञेयं भावनान्तरम् ।
उत्पत्त्यैकानुरक्ता हि नान्येनाप्यनुरज्यते ॥ इति ।

(तं. वा., पृ. ४६४)

(एतदेवाजिताकृता स्वीकृतम्—)

ज्ञेयभेदे यथा ज्ञानं साध्यभेदे तथा क्रिया ।
रूपस्यैवान्यरूपत्वाद्भिद्यतेऽनुपचारतः ॥ इति ।

अत एव च न क्रयवाक्यवन्निष्कृष्टभावनानुवादेन धात्वर्थान्तरविधानम्, तथावगताया भेदेन निष्क्रष्टुमशक्यत्वात् । न च

प्रत्ययेन निष्कृष्टैव भावनाभिहिता प्रकृत्यभिहितेन धात्वर्थेनाभिहितान्वयरूपेण परमसावन्वीयत इति निष्कृष्टानुवादो भविष्यतीति वाच्यम्, प्रतीतिविरोधात्। न हि यथा 'देवदत्तः पचति' इति विभक्त्यवगतयोः पश्चादन्वयोऽवगम्यते, तथा पचतीत्यत्र प्रकृतिप्रत्ययार्थयोः। किन्तर्हि? प्रत्ययोच्चारणानन्तरं हि प्रकृत्यर्थान्वित एव प्रत्ययार्थः प्रतीयते। किञ्चैवं सति 'प्रत्ययः, परश्च' (पा. सू., ३. १. १, २) इति प्रकृतिप्रत्ययपौर्वापर्यनियमानुशासनमपि विशिष्टविधानार्थत्वेन दृष्टार्थं भवति। इतरथा पौर्वापर्यानियमेऽप्यभिधानोपपत्तौ नियमानुशासनमदृष्टार्थमापद्येत। किञ्चैवमभ्युपगम्यमाने गुणादेव भेदो भवेत्, न शब्दान्तरात्। अयमेव गुणशब्दान्तरयोर्भेदः—यत्राख्यातभेदप्रथमावगतभावनावगम्यते, तत्र शब्दान्तराद्भेदः। यत्र तु स्ववाक्यस्थगुणान्तरावरुद्धायां भावनायां वाक्यान्तरोपात्तो गुणः प्रवेशमलभमानः कर्मान्तरबुद्धिं जनयति, तत्र गुणान्तराद्भेदः। अभिहितान्वये तु धात्वर्थान्तरावरुद्धत्वात् धात्वर्थान्तरयोगेऽसति गुणादेव भेदो भवेत्, न शब्दान्तरादिति।

भवतु वाभिहितान्वयः, तथापि न क्रयवाक्यवन्निष्कृष्टानुवादेन धात्वर्थान्तरविधानं सम्भवति। अगत्या हि तत्रैतत्स्वीकृतम्। तथाहि—न तावत्तत्र क्रयाणामुत्पत्तिः, क्रयान्तर-

वैयर्थ्यात् । नापि विकल्पेनोत्पत्तिः, बहुमूल्याल्पमूल्यद्रव्याणां विषमशिष्टत्वेन विकल्पासम्भवात् । तेन समुच्चयो वक्तव्यः । न चासौ क्रयाणां सम्भवति । एकदा क्रये एकस्मिन्मूल्ये एकजातीयकर्मणां समुच्चयासम्भवात् । तेन द्रव्याणामेव भिन्नानतिप्रयोजनानामेकस्मिन् क्रये समुच्चयो वक्तव्यः । तत्र यदि वाक्यान्तरे क्रयोत्पत्तिः, तदा तदनुवादेनारुणावाक्येनानेकगुणविधानासम्भवादरुणावाक्योत्पन्नामेव क्रयभावनामनूद्य वाक्यान्तरैर्वासःप्रभृतयो विधीयन्त इति गत्यन्तरासम्भवादाश्रितम् । इह तु कर्मभेदेनैवोपपत्तेर्नास्ति गत्यन्तरासम्भवः । भावनाप्रत्यभिज्ञा तु भावनाभेदेऽपि सामान्यविषयत्वेनाविरूद्धेति न किञ्चिदनुपपन्नम् ।

प्रयोजनम्—पूर्वपक्षे सर्वेषामेवाख्यातार्थानां समप्रधानत्वम् । सिद्धान्ते तु यागस्यैव फलसम्बन्धात्तस्यैव प्राधान्यमितरेषां तु गुणभावः । तथाच सति विकृतावतिदेशानतिदेशयोर्विशेषः ।

सूत्रन्तु—शब्दान्तरे यजेतेत्यस्माज्जुहोतीत्यादौ कर्मणो भावनाया भेदः कृतानुबन्धत्वात् कृतविलक्षणधात्वर्थावच्छेदत्वादित्यर्थः ॥

इति प्रथमं शब्दान्तराधिकरणम् ॥१॥

## अथ द्वितीयमभ्यासाधिकरणम्

## एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्॥२.२.२.॥

### (विषयसंशयसङ्गतयः)

"समिधो यजति" "तनूनपातं यजति" "इडो यजति" "बर्हिर्यजति" "स्वाहाकारं यजति" (तै. सं., २. ६. १.) इत्येवं पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः किमेकमपूर्वं चोदयति ? किं वा प्रत्यभ्यासमपूर्वभेदम् ? इति । अत्र शब्दान्तरानन्तरं पञ्चभिः प्रमाणैः कर्मभेदे वक्तव्येऽभ्यासपूर्वपक्षस्य शब्दान्तरप्रत्युदाहरणरूपत्वादनन्तरमभ्यासारम्भः ।

### (पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—युक्तं प्रत्ययैकत्वेनैकरूपतया प्रतिभासमानोऽपि प्रत्ययार्थः प्रकृत्यर्थोपरागात्प्रतिधातु भिद्यत इति । इह धातोरप्येकत्वेनैकरूपधात्वर्थोपरागात्कुतो भेद इति । न हि शतकृत्वोऽपि करः कर इत्युक्ते भेदोऽवगम्यते । तदुक्तम्—

> प्रत्ययार्थः समानोऽपि धातुभेदेन भिद्यते ।
> धातोरपि समानत्वे केन भेदोऽवधार्यताम् ॥ इति
>
> (तं. वा., पृ. ४६८.)

न चार्थाभेदे सति दृष्टार्थाध्ययनविध्युपस्थापितस्य यजति यजतीत्यस्य पञ्चधाभ्यस्तस्यानर्थक्यमयुक्तमिति प्रत्युच्चारणमर्थभेद

एवेति वाच्यम् । मन्त्रवत्प्रयोगविधिपरिगृहीतानामसमवेतार्थानामदृष्टार्थानामदृष्टार्थत्वेनैवोपपत्तिः । अथवा प्राथम्यानुरोधेन समिद्वाक्येनैव सिद्धान्तवत्समिन्नामावच्छिन्ने कर्मणि विहिते तदितरैस्तदनुवादेन तनूनपादादिदेवताभिधानादर्थवत्त्वं भविष्यति । न च कथं नामधेयत्वमिति वाच्यम् । "समिद्धथः स्वाहा" इति मान्त्रवर्णिकदेवसम्बन्धनिमित्तत्वेन समित्पदस्य नामधेयत्वात् । न चैवं सति वाक्यविहिततनूनपादादिदेवताभिर्दुर्बलमान्त्रवर्णिकदेवताबाध एवेति वाच्यम् । मान्त्रवर्णिकसमिद्देवतामपेक्ष्य समिन्नामावच्छिन्नयागानुवादेनैव तनूनपदादिदेवताविधानात् 'न निमित्तं विधिरपबाधते' इति न्यायान्न मान्त्रवर्णिकसमिद्देवताबाधः । अतो देवतानां विकल्प एवेति ।

ननु समिद्यागवत् "तनूनपाते स्वाहा" इत्यादिमन्त्राः क्रमपठिताः प्रत्येकं भिद्यन्त एव, तत्र तनूनपादादिवाक्येष्वपि मान्त्रवर्णिकदेवताप्राप्तिनिमित्तनामावच्छिन्नकर्मविधानमेव युज्यते । गुणविधानन्तु कुतः ? स्यादेवं यदि यजतीत्यत्र प्रकृतकर्मप्रत्यभिज्ञानबलेन च कर्मैकत्वे सति तस्याविधेयत्वाद्यदि गुणमपि न विदध्यात्, वाक्यमनर्थकमेव भवेत् । तेन मान्त्रवर्णिकीं प्राप्तिमुपेक्ष्य प्रकृते समिद्यागे वैकल्पिकदेवताविधानार्थत्वमेवोत्तरेषामिति ।

अथवा सर्वैरेव समिदादिवाक्यैरुपांशुयाज एव मान्त्रवर्णिक-

देवताबाधेन वैकल्पिक्यः समिदाद्या देवता विधीयन्त इति । न चोपांशुयाजवाक्यक्रमाम्नातमन्त्रानर्थक्यम् । उत्तरेणापि समिदादिदेवताप्रकाशनेनार्थवत्वात् । यत्र वा विष्णवादयो देवतास्सन्ति, तत्रोत्कर्षेणार्थवत्वं भविष्यति । अस्मिंश्च पक्षे 'पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः किमेकमपूर्वं चोदयति' इति भाष्यमेवं नेयम्—एकमुपांशुयाजवाक्यमपूर्वं चोदयति अनुगृह्णातीत्यर्थः । न च वाच्यम्—

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वेष्यते ।
देवतासङ्गतिस्तत्र दुर्बलं तु परं परम् ॥

( तं. वा., पृ. ५३३ )

इति चतुर्थीमन्त्रवर्णानामेव देवताप्रतिपादकत्वमुक्तम् । तत्किं द्वितीयान्ततनूनपादादिपदैर्देवताविधानमिति । यतो "विष्णुं यजति" इत्यादिद्वितीयान्तेनापि देवताविधानात्प्रायिकमिदम् । तेन पञ्चधाभ्यस्तेन यजतिशब्देन एकमेव समिद्यागभावनारूपम्, उपांशुयाजभावनारूपं वा कर्म प्रतिपाद्यत इति । एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यदि प्रत्यभिज्ञानमात्रमनुवादकारणं भवेत्, किन्तर्हि ? अनुवादाकाङ्क्षापि । सा च विधेयोपपदार्थप्राप्तौ भवति । तथाहि—भावनार्थो विधिः प्रथमं भावनामेव धात्वर्थानुरक्तां विदधातीत्युचितम् । यदा तूपपदार्थं लिप्सते, तदा विशिष्टविधिगौ-

रवभिया धात्वर्थं परित्यज्योपपदार्थमेव विधातुमनुसन्धत्ते। तत्र विधियोग्योपपदार्थप्राप्तौ सत्यां धात्वर्थमनुवदितुमाकाङ्क्षति। ताञ्चाकाङ्क्षां धात्वर्थप्रत्यभिज्ञा पूरयति। यदि तु विधियोग्योपपदार्थप्राप्तिर्न भवति, नापि धात्वर्थप्रत्यभिज्ञानम्, तदा परावृत्य भावनानुरञ्जकतया धात्वर्थमेव विदधातीति सर्वत्र स्थितम्। न चात्र विधिर्विधानयोग्यमुपपदार्थं पश्यति। तथाहि—विधेयता द्रव्यत्वेन वा? देवतात्वेन वा? न च तनूनपादादिरूपं द्रव्यं किञ्चिल्लोके प्रसिद्धमस्ति। नापि द्वितीयान्तेन देवता प्रतिपादयितुं शक्यते। "विष्णुं यजति" इत्यादावगत्या तथाश्रितम्। न चेह गत्यन्तरं नास्ति। मान्त्रवर्णिकदेवतालाभात्तत्प्रख्यन्यायेन नामधेयत्वेनोपपत्तेः। अतोऽत्र प्रतिवाक्यमभ्यस्तो विधिर्गुणानाक्षिप्तशक्तिर्भावनामेव धात्वर्थानुरक्तां विदधाति। तदुक्तम्—

आख्यातप्रत्ययः पूर्वं विधत्ते कर्म शक्तितः।
अन्येनाक्षिप्तशक्तिस्तु तदाकाङ्क्षत्यनूदितम्॥ इति।

(तं. वा., पृ. ४६६)

न च विहितस्य विधानं सम्भवतीति प्रत्यभ्यासं कर्मभेद एवेति। न चात्र वर्त्तमानापदेशरूपतया विध्यभ्यास एव नास्तीति वक्तव्यम्। "वर्म वा एतद्यज्ञस्य क्रियते, यत्प्रयाजानूयाजा इज्यन्ते वर्म यजमानाय भ्रातृव्याभिभूत्यै" (तै. सं., २. ६. १. ५.)

इत्यर्थवादसम्बन्धेन पञ्चमलकारविधिर्निर्णीयते, विधिस्तुत्योरेक-विषयत्वात् ।

यत्तु 'गुणो वा नामधेयं वा समिदादिपदं भवेत् । ताभ्यामेव च भेदोऽत्र किमभ्यासः करिष्यति' ॥ इत्युक्तम्, तत्र समिदादि-पदानामुक्तक्रमेण गुणपरत्वासम्भवादेव गुणस्य तावन्न भेदकत्वम् । नापि नामधेयस्य, अनन्यपरविध्याख्यातसमभिव्याहृतत्वात् । न ह्यत्रान्यथासिद्धविध्याख्याताभ्यासः, यथा "उद्भिदा यजेत पशु-कामः" इत्यत्र, तत्र प्रकृतस्यैव ज्योतिष्टोमस्य यजिशब्देनानूद्य पशुफले विधानेनापि विध्याख्याताभ्याससामर्थ्यान्न कर्मान्तरत्वम् । किन्तर्हि ? गुणस्यैव, ज्योतिष्टोमनामावरुद्धे नामान्तरस्य प्रवेशा-सम्भवात्तत्र नामधेयमेव भेदकम् । अत्र त्वनन्याकृष्टतात्पर्यस्या-ख्यातस्यैव कर्मान्तरमन्तरेणासम्भवः । विध्याख्याताभ्यासस्यैव भेदकत्वे सिद्धे नामधेयमपि तद्विषयमेव व्यवतिष्ठते, न त्वप्रत एव । तदुक्तम्—

प्रायेणाख्यातसम्बन्धि नामेष्टं पारतन्त्र्यभाक् ।
तस्यैव प्रथमं तेन भेदाभेदनिमित्तता ॥ इति ।

(तं. वा., पृ. ४६७)

न चैवं सति यथाभ्यासाद्भेदस्तथा "समिधो यजति" इति बहुवचनश्रुतेः संख्यातोऽपि भेदः प्राप्नोतीति वक्तव्यम् । अनन्यगा-

मिनी हि संख्या कर्मगता कर्म भिनत्ति। यथा—"तिस्र आहुतीर्जुहोति" (तै. सं., २. ३. ८.) "द्वादश द्वादशानि जुहोति" इति। इह पुनः "समिद्भ्यः स्वाहा, इड्भ्यः स्वाहा" इति मान्त्रवर्णिकदेवतासम्बद्धस्य नामप्रवृत्तिनिमित्तत्वाद्देवताबहुत्वनिमित्तमेवैतद्बहुवचनम्, न चैतद्बहुत्वं कर्मनिमित्तमिति। अत्र च वाक्यान्तरावगतभावनानुवादेन धात्वर्थविधानस्य पूर्वाधिकरणे निरस्तत्वात्। स्ववाक्यावगतभावनानुवादस्य च पूर्वाप्राप्तत्वेनानुवादासम्भवाद्भावनाभिधानमवश्याङ्गीकरणीयम्। विधिश्चाभ्याससहायो भेदक इति सधात्वर्थामेव भावनां विधिर्भेदयति। अतो यद्भ्रान्ताः केचिज्जल्पन्ति—धात्वर्थभेद एवाभ्यासतो धात्वर्थभेदाच्च भावनाभेद इति, तदुपेक्षणीयमेवेति।

प्रयोजनम्—पूर्वपक्षे एकस्मिन् कर्मणि देवतानां वैकल्पिकत्वात्सकृदनुष्ठानम्। सिद्धान्ते तु प्रत्यभ्यासं कर्मभेदेनानुष्ठानम्।

सूत्रन्तु—एकस्य पुनःश्रुतेरेवं स्यात्। यथा शब्दान्तरं भेदकं तथा स्यात्, अविशेषात्। अन्यथा कश्चिद्विशेषमनभिदधद्वाक्यमनर्थकमेव स्यात्।

इति द्वितीयमभ्यासाधिकरणम् ॥२॥

## अथ तृतीयं पौर्णमास्यधिकरणम्

### प्रकरणन्तु पौर्णमास्यां रूपावचनात् ॥ २. २. ३. ॥

(विषयसंशयसङ्गतयः)

एवं समामनन्ति—"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" (तै. सं., २. ६. ३. ३.) "तावब्रूता-मग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति" ताभ्यामेत-मग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" (तै. सं., २. ५. २. ३.) "ऐन्द्रं दध्यमावास्यायाम् ऐन्द्रं पयोऽमावास्यायाम्" (तै. सं., २. ५. ४. १.) इति। तथा "आघारमाघारयति" (तै. ब्रा., ३. ३. ७.) "आज्यभागौ यजति" "स्विष्टकृते समवद्यति" "पत्नीः संयाजयति" "समिष्टयजूंषि जुहोति" "य एवं विद्वान्पौर्णमासीं यजते" "य एवं विद्वानमावास्यां यजते" (तै. सं., १. ६. ३. १.) इति। तत्र सन्देहः—किं सर्वाण्येतानि समप्रधानानि? उताग्नेया-दीनि पयोन्तानि प्रधानानि, आघारादीन्युपकारकाङ्गानि। तथा "य एवं विद्वान्" इत्येवंसंयुक्तौ प्रकृतानां कर्मणामनुवदि-तारौ, अथवा पूर्वयोः कर्मणोर्विधातारौ, तत्रेतरे गुणविधय इति। पूर्वाधिकरणेनाभ्यासतो भेदमभिधायेदानीं तदपवादः क्रियते। अत्र "य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते" इति वाक्यद्वयमेव विचारविषयत्वेनोदाहरणम्। यत्तु

भाष्यकारेण दर्शपूर्णमासप्रकरणपठितानि बहून्यङ्गप्रधानवाक्यान्युदाहृत्य किं समप्राधान्यम्? अङ्गाङ्गिभावो वेति संशयप्रदर्शनं कृतम्, न तद्विचार्यत्वेन, किन्तर्हि? प्रस्तुताधिकरणपूर्वपक्षसिद्धान्तप्रयोजनत्वेनेति मन्तव्यम्, शेषशेषिविचारस्य करिष्यमाणत्वात्।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—विद्वद्वाक्यद्वयप्रतिपादितयोः कर्मणोराघारादिभ्यस्तावद्यागरूपेभ्यः शब्दान्तरादेव भेदः, यागरूपेभ्य आग्नेयादिभ्योऽभ्यासादेव भेदः। अतः पृथगेवैतत्कर्मद्वयम्। ननु वर्तमानापदेशसरूपत्वात्कर्तृयोगियच्छब्दोपबन्धेनैव विधिरूपतिरस्काराभानयोर्विधित्वम्। विध्यभ्यासश्च भेदक इत्युक्तम्। तत्कथमनयोर्विध्यभावात्कर्मभेदप्रतिपादकत्वम्? न चैवं सति वाक्यद्वयमेतदनर्थकम्। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यधिकारवाक्यापेक्षितसमुदायद्वयकरणेनार्थवत्वात्।

उच्यते—वर्त्तमानापदेशसरूपत्वेऽपि प्रयोगवचनोपसंग्रहेण पञ्चमलकारनिर्णयादेवास्य विधित्वम्। तथाहि—प्रयोगवचनसन्निधिसमाम्नानेन तदेकवाक्यतापन्नमिदं वाक्यद्वयम्। तदेकवाक्यत्वञ्च तदपेक्षितार्थप्रतिपादने भवति। तच्चास्य मन्त्रार्थवादरूपत्वाभावात्कर्मविधित्वेनैव निर्णीयते। न च कर्तृयोगियच्छब्दैवंशब्दाभ्यां विधितिर-

स्कारः, क्रियाविशेषितकर्तृयोगी हि यच्छब्दो विशेषणीभूतक्रिया-विधानपरिपन्थी भवति। यथा "यो दीक्षितो यदग्नीषोमीयं पशु-मालभते" इति। अत्र हि दीक्षारूपक्रियाविशेषितकर्तृयोगी यच्छब्दो दीक्षाविधानपरिपन्थी भवति, न तु पशुद्रव्यकाग्नीषोमदेवतायाग-विधानपरिपन्थी। एवमिहापि यो विद्वानिति वेदनक्रियाविशेषित-कर्तृयोगी यच्छब्दो वेदनक्रियाविधानमेव प्रतिबध्नाति, न याग-क्रियाविधानमिति। तथैवंशब्दोऽप्येवं विद्वानिति वेदनक्रियापरा-मर्शक एव, न यागक्रियापरामर्शक इत्यव्याहतमेव विधित्वमिति। न चाधिकारापेक्षितसमुदायकरणेनानुवादस्यार्थवत्वं राजसूयव-त्फलवाक्येनैव समुदायकरणासम्भवात्। न चैवं सति 'राजसूयेन' इतिवत् 'दर्शपूर्णमासेन' इत्येकवचनप्रयोगप्रसङ्गः। 'सुपां सुपो भवन्ति'. इत्येकवचनस्थानप्रयुक्तस्यैकवचनसमानार्थत्वात्। अतः समिदादिवद्विध्यभ्यासादेव पौर्णमास्यमावास्यानामावच्छिन्नमेवैत-त्कर्मद्वयं विधीयते। न च प्रवृत्तिनिमित्ताभावान्न नामधेयम्। अग्निहोत्रादानामिव विधास्यमानदेवसम्बन्धनिरीक्षणेन "पौर्णमास्यां पौर्णमास्या यजेत" "अमावस्यायाममावास्यया यजेत" इति वाक्य-द्वयविधास्यमानकालसम्बन्धप्रवृत्तिनिमित्तनिरीक्षणेन कर्मद्वये नाम-धेयत्वोपपत्तेः। न चासिद्धे नाम्नि कथं तदुल्लेखेन काल-विधिः, अन्योन्याश्रयादिति वाच्यम्। यतः "अग्निहोत्रं जुहोति"

इतिवत्सामानाधिकरण्येनैव नामत्वे सिद्धे तदुल्लेखेन भाविकालविधिना प्रवृत्तिनिमित्तमात्रं निर्णीयते इति नानुपपन्नम् ।

ननु द्रव्यदेवते हि कर्मणो रूपम् । न चात्र देवतास्ति । न चाव्यक्तचोदनात्वसामान्येन सौमिकद्रव्यदेवतालाभेन रूपवत्वम् । यतो निरपेक्षो हि विधिः, सापेक्षेणोपजीव्यते । अत्र च सोमविधेर्दीक्षणीयाद्यङ्गद्वारेण दर्शपूर्णमासविध्युपजीवित्वेन कर्मापेक्षत्वम् । तद्यदि दर्शपूर्णमासविधेरपि तदुपजीवनम्, तदेतरेतराश्रयापत्तिः। तत्कथं कर्मविधित्वमिति । मैवम्; "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" ( तै. ब्रा. ३. ३. ५. ५ ) इति प्रकरणश्रुताज्यद्रव्यस्य ध्रुवावाक्याद्द्रव्यं तावदस्ति । न चैकेनैव वाक्येनाज्यस्य ध्रुवासम्बन्धविधाने यागसम्बन्धविधाने च वाक्यभेदः । "यद्ध्रुवायामाज्यम्' इत्यस्य ध्रुवासम्बन्धमनूद्य. यागसम्बन्धमात्रविधानात् । तद्यद्याज्यध्रुवासम्बन्धबोधकं वाक्यान्तरं श्रुतमस्ति, तदा तत्प्राप्तानुवादेनानुवाद एव । अथ नास्ति तदैतदर्थवादान्यथानुपपत्तिकल्पितवाक्यलभ्यस्यैवानुवाद इति नानुपपन्नम् ।

देवताप्राप्तिरपि मान्त्रवर्णिकी । "वार्त्रघ्नी पूर्णमासेऽनूच्येते, वृधन्वती अमावास्यायाम्" ( तै. सं., २. ५. २. ५ ) इत्येतद्वाक्यान्वयेन वार्त्रघ्नीशब्दाभिधेयमृग्द्वयं वृधन्वतीशब्दाभिधेयं चर्ग्द्वयमा-

ज्यभागक्रमपठितमपि वाक्यबलेन क्रमं बाधित्वैतत्कर्मसम्बन्धित्वेन विधीयते। तयोश्चैकाग्नेयी, अपरा सौमी। तत्र चैकैकस्मिन् कर्मणि युगपद्विनियुक्तमन्त्रद्वयेन युगपद्देवताद्वयसमर्पणाद्देवतयोरेकैकस्मिन् कर्मणि समुच्चय एव। तथा सति मन्त्रयोरपि समुच्चय एव। एतदनुरूपयाज्याप्राप्तिश्च दाशतयोपाठाद्भवतीति नानुपपन्नम्। तेनाज्यभाग एव कालव्यवस्थार्थं वाक्यद्वयं यथासिद्धान्तमेव भविष्यति। पौर्णमास्यां यावाज्यभागौ तौ वृत्रहपदवन्मन्त्रकौ। अमावास्यायां यावाज्यभागौ तौ वृधन्वत्पदमन्त्रकाविति। मैवम्; पूर्वपक्षे कालविधायकवाक्यद्वयं विद्वद्वाक्यविधेयकर्मद्वयस्यैककालविधानात्। आज्यभागयोः पौर्णमास्यमावास्याकालप्राप्तौ न तद्व्यवस्थार्थत्वमिति मन्त्रविधायकत्वमेवेति। तदुक्तम्—

> ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी।
> रूपवन्तावतो यागौ विधीयेते पृथक्तया॥ इति।
>
> (तं. वा., पृ. ४७५)

आज्यभागयोस्तु "यस्यै कस्यैचिद्देवतायै हविर्निर्वपन् आज्यस्यैव नौ पुरस्ताद्यजन्" इति पुराकल्पसरूपेण वाक्येनाग्नीषोमयोर्लाभादत्रापि तयोर्देवतात्वम्। अत्र यद्यपि साक्षादग्नीषोमयोः श्रवणं नास्ति, तथापि "ताब्रूतामग्नीषोमावाज्यस्यैव नौ"

इत्यत्र नौशब्देन तदुपादानव्यवस्थितत्वादत्रापि नौशब्देन तयोरेवोपादानमिति। याज्यानुमन्त्रणक्रमप्राप्तानबाधित्वैव अनुवाक्यायुगलमात्रस्य वाक्येनान्यत्र विनियुक्तत्वात्। अनुवाक्याप्राप्तिश्च दाशतयोपांशुकाण्डादेवेत्येकः पूर्वः पक्षः।

अथवा आग्नेयादिवाक्यैरेव विद्वद्वाक्योत्पन्नकर्मद्वयसम्बन्धेन गुणविधानाद्रूपलाभो भविष्यति। न च प्राप्ते कर्मण्यनेकविधानदोषः। "पुरोडाशं संयुनक्ति" "पुरोडाशं पर्यग्नि करोति" इत्यादिसांस्कारवाक्यपर्यालोचनेन पुरोडाशादिद्रव्यप्राप्तावग्न्यादिदेवतामात्रविधानात्। यद्वा भिन्नपदोपात्तानेकार्थविधाने हि विध्यावृत्तिलक्षणो वाक्यभेदो भवति। यथा "वाससा क्रीणाति" इत्येनेनोत्पन्ने क्रयेऽरुणादिवाक्येनानेकगुणविधाने। अत्र त्वेकेनैवाग्नेयादिपदेनानावृत्तेनाग्निदेवताविशिष्टपुरोडाशादिरूपद्रव्योपस्थानात्प्रत्ययेन चैकदेवताविधानान्नावृत्तिलक्षणो वाक्यभेदः। यत्र तु पृथक्पदेन द्रव्यदेवतोपादानम्, यथा "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्" इत्यस्य पुराकल्परूपत्वेनाविधायकत्वात्। तदेवं द्विधा पूर्वपक्षः सम्पद्यते। एकत्राग्नेयादिवाक्यविहितानि षट् कर्माणि विद्वद्वाक्ययुगलविहितं च कर्मद्वयमित्यष्टौ कर्माणि। अपरत्र चाग्नेयादिवाक्ये गुणविधानाद्विद्वद्वाक्ययुगलविहितकर्मद्वयमेव। तदेवं पूर्वपक्षद्वयेऽपि दर्शपूर्णमासोपपदस्य कस्मिंश्चित्कर्मत्रय-

प्रसिद्धत्वाद्यजेस्तु यागमात्रविषयत्वेन प्रसिद्धत्वाद्यजिसामानाधिकरण्येन यजिमात्रनामत्वम् । तदुक्तम्—

प्रसिद्धेनाप्रसिद्धस्य नित्यमिष्टं विशेषणम् ।
तस्माद्यज्यनुरोधेन नामार्थोऽत्र निरूप्यते ॥ इति ।

(तं. वा., पृ. ४७६)

तथा सति प्रकृतयागानामेव फले विधानाद्राजसूयवत्सर्वेषामेव प्रयाजानूयाजानामपि समप्रधानत्वमेवेति । नन्वेवं सति प्रधानस्यानतिदेशात्कथं विकृतौ प्रयाजातिदेशः ? वचनादित्युच्यते—"प्रयाजे प्रयाजे कृष्णलं जुहोति" इत्यादि । अत्र प्रयाजानुवादेन कृष्णलहोमविधानादेवेति नानुपपन्नम् । अथ कस्मादेतावेव विद्वद्वाक्ययुगलविहितौ पौर्णमास्यमावास्यासंज्ञकौ········जफले तयोरविधानम् ? एवन्तर्हि समुदायनामत्वेऽपि तयोरप्रत्यभिज्ञानात्सिद्धान्तेऽपि कथं फले विधानम् ? अथ सिद्धान्ते न संज्ञाद्वारेण समुदायद्वयोपस्थापनम्, किन्तर्हि ? कालद्वारेण । एवन्तर्हि एतत्कर्मद्वयेऽप्यविशिष्टम्—"पौर्णमास्यां पौर्णमास्यया यजेत" "अमावास्यायामावास्यया यजेत" इति वाक्यद्वयेन कालविधानस्योक्तत्वात् । तेनानयोरेव फलवाक्येन विनियोगात्कुतः समप्राधान्यमिति । नैतत्; कालसंयोगस्याग्नेयादीनामपि षण्णामविशिष्टत्वेन कस्य यागद्वयस्य ग्रहणमिति निर्णेतुमशक्यत्वात् ।

तदुक्तम्—

षण्णामग्न्यादियागानामनयोश्च द्वयोरयम् ।
समानः कालसंयोग इति नेष्टावधारणा ॥ इति ।

(तं. वा., पृ. ४७७)

न च वाच्यम्—द्विकर्मपक्षे तावदयं परिहारो न सम्भवत्येव । अष्टकर्मपक्षेऽप्येवं सति कालद्वारेणाष्टानामेव कर्मणां फले विनियोगो न भविष्यतीति प्रयाजादिभिः सह समप्राधान्यमिति । यतः, पूर्वप्रसिद्धं हि स्वयं फलवाक्यमुपादत्ते । न तु फलसम्बन्धपरं वाक्यम् । उपपदस्यापि वृत्यन्तरेणार्थान्तरपदत्वमापादयितुमुत्सहते तदिहापि कालवचनौ दर्शपूर्णमासशब्दौ लक्षितलक्षणया कालयोगिनौ यागानुपस्थापयितुमर्हतः । तेनोपपदस्याप्रसिद्धत्वात्प्रसिद्धार्थयजिसामानाधिकरण्येन यज्यर्थत्वमेव निर्णीयते । सिद्धान्ते तु समुदायानुवादस्यैव फलवाक्यस्योपपदप्रसिद्धप्रयोजनत्वाद्युक्तं समुदायस्यैव फलविधानम् । न चेह तथा समस्तीति पूर्वपक्षद्वयेऽपि समप्राधान्यमेवेति । एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं विध्यभ्यासतः कर्मभेदो यदि विद्वद्वाक्ययुगलस्य कर्तृयुक्तयच्छब्दस्यैवंशब्दयोगेनानुवादकत्वं न भवेत् ।

यत्तु वेदनकर्त्तृयोगी यच्छब्दो न यागकर्त्तृयोगीत्युक्तम्। अव्यभिचारेणैव वेदनकर्त्तृत्वस्य प्राप्तत्वेन यच्छब्दाविशेषणीयत्वात्। "यो दीक्षितः" इत्यत्र तु दीक्षितादीक्षितयोरपि यागकर्त्त्वाविशेषात् "यो दीक्षित" इत्यविशेषणम्। न चेह वेदनरहितस्याचेतनस्य यागकर्त्तृत्वमस्तीति यो वेदनकर्त्ता स यजेतेति विशेषणवैयर्थ्याद्यागकर्त्तृविशेषणमेव यच्छब्दः। तत्सहचरितश्चैवंशब्दोऽपि तथा तदनुवादकत्वादविधायकत्वमेवेति। तदुक्तम्—

क्रियापदैकयोगित्वे यच्छब्दो न रुजेद्विधिम्।
कर्तृयुक्तः स एवान्यप्रापितार्थानुवादकृत्॥ इति।

(तं. वा., पृ. ४८८)

किञ्च रूपाभावादपि न यागाविधायकत्वम्। तत्र भवतु तावद्यथाकथञ्चिद्द्रव्यलाभः, देवतालाभस्तु न कथञ्चिदपि सम्भवति। न च मान्त्रवर्णिकदेवताप्राप्तिः। याज्यानुवाक्यामन्त्रयोराज्यभागक्रमपठितत्वेन तदर्थत्वाभावात्। न च वाक्येन क्रमं बाधित्वा कर्मद्वयसम्बन्धो मन्त्रस्य क्रियते "वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्" (तै. सं. २. ५. २. ५) इति मुख्यकालवचनयोः कर्मपरत्वाभावात्। तदुक्तम्—

प्रथमं काल एवाभ्यां शब्दाभ्यां प्रतिपाद्यते।
पश्चात्तु कर्म तद्योगादतः कालोऽत्र गृह्यते॥ इति।

(तं. वा., पृ. ४७८.)

नापि कालद्वारेण लक्षणया कर्मपरत्वम् । आज्यभागयोरेव पौर्णमास्यमावास्याकालयोगेन मन्त्रव्यवस्थापकतया मुख्यार्थोपपत्तौ क्रमबाधेन लाक्षणिकत्वस्वीकारासम्भवात् । न चाज्यभागयोः पौर्णमास्यमावास्याकालस्य प्राप्तत्वान्न मन्त्रव्यवस्थापकत्वं वचनस्येति वाच्यम् । यतः सिद्धान्ते तावत्प्रयोगद्वयेन साङ्गस्यैव पौर्णमास्यमावास्याकालो लब्ध एव । तथा पूर्वपक्षेऽपि सर्वेषां समप्राधान्येन सहचरितानां मध्येऽष्टानां कालसम्बन्धस्य श्रुतत्वादितरेषामपि कालसम्बन्धे कल्प्यमाने प्रयोगविधितस्तत्कालस्यैव बुद्धौ विपरिवृत्तेस्तत्कालसम्बन्धमेव कल्पयति । तत्र पौर्णमास्यमावास्याकालयोर्विनिगमनाप्रमाणाभावादिच्छावशादनुष्ठाने सति भवत्यव्यवस्थार्थं वचनम् । यदा पौर्णमास्याज्यभागौ, तदा वार्त्रघ्नी अनूच्येते, यदामावास्याज्यभागौ, तदा वृधन्वती अनूच्येते । अतो मान्त्रवर्णिकदेवताया अभावेनारूपत्वान्न कर्मविधित्वम् । किञ्च नामावच्छिन्नं हि कर्मद्वयमेतद्विधातव्यम् । न च प्रवृत्तिनिमित्ताभावेन पौर्णमास्यमावास्यापदयोर्नामधेयत्वमस्ति । नापि कालविधिपरे वाक्ये विधास्यमानभाविकालसम्बन्धनिरीक्षणेन नामधेयत्वमिति वाच्यम् । उत्पत्तौ हि नामप्रवृत्तिनिमित्तत्वं कालस्य । न च कालविधिपरे वाक्यद्वये विद्वद्वाक्यद्वयोत्पन्नं कर्म प्रतीयते । तेन यथाभूतस्य नामसम्बन्धो न तथाभूतस्य

कालसम्बन्धः, यथाभूतस्य कालसम्बन्धो न तथाभूतस्य नामसम्बन्ध इति। अग्निहोत्रादौ तु यथाभूतस्योत्पत्तिस्तथाभूतस्यैव "यदग्नये च प्रजापतये च सायं जुहोति" (मै. सं., १. ८. ७.) इत्युत्पत्तिवाक्यगतहोमस्वरूपावगमाद्वैषम्यादिति नानुपपन्नम्।

नन्वेवं तर्ह्याग्नेयादिवाक्यैरेव देवतामात्रविधानाद्रूपभावो भवति। मैवम्; प्राप्ते कर्मणि द्रव्यदेवतारूपानेकगुणविधाने वाक्यभेदप्रसङ्गात्। न च संस्कारवाक्यपर्यालोचनेन द्रव्यप्राप्तौ देवतामात्रविधानान्न वाक्यभेद इति वाच्यम्। द्रव्यविधानमन्तरेण संस्कारत्वासम्भवात्। अन्यथा 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः' इति न्यायेन प्रधानकर्मत्वापत्तेः। किञ्च भवतु तावद्द्रव्यप्राप्तिः, तथाप्याग्नेयपदोपात्ताग्निविधानेऽष्टाकपालपदोपात्ताष्टत्वविधाने च वाक्यभेदः। तेन यदुक्तं तद्विधानैकपदोपात्तदेवताविशिष्टद्रव्यविधानान्न वाक्यभेद इति, तदपि निरस्तम्। अष्टाकपालपदोपात्तात्वसंख्याविधानस्यावश्यकत्वेन वाक्यभेदस्य तदवस्थत्वात्। तथाच सूत्रम्—

"चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत" ॥ (जै. सू., २. २. ६) इति।

ननु सिद्धान्ते चैकेन वाक्येन द्रव्यदेवतासम्बन्धकालयागानां विधाने वाक्यभेदस्समान एव। न; सकलविशेषणविशिष्टैकभावना-

मविधाने भावार्थतो भावात् । न चैवंसति विशेषणानामविधानम् । विशिष्टविध्यन्यथानुपपत्तिकल्पितविधिभिरेव विशेषणविधानात् । तदुक्तम्—

श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् ।
एकोक्त्यवसितानान्तु नार्थाक्षेपो विरुध्यते ॥
प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ इति ।

(तं. वा., पृ. ४८५.)

ननु यथा विशिष्टविधिर्विशेषणविधिसापेक्षस्तथा विशेषणविधिरपि विशेष्यलाभाय विशिष्टविधिसापेक्ष एवेत्यन्योन्याश्रयाद्विशिष्टविधिरपि न सम्भवति । उच्यते—स्यादेवं यदि विशिष्टविधिर्विशेषणविध्यवगमापेक्षप्रवृत्तिर्भवेत् । किन्तर्ह्याकाङ्क्षितसन्निहितयोग्यविशेषमात्रावगमापेक्षप्रवृत्तिः । तानि च विशेषणानि विशिष्टविधिवाक्य एव पदप्रतिपादितानि, किन्तु विधिप्रतिपादिता विशिष्टविषयिणी कर्त्तव्यता न विशेषणानां कर्त्तव्यतामनासाद्य पर्यवस्यतीति विशेषणकर्त्तव्यतापेक्षायां पूर्वसिद्धा एव विशेषणविधयः श्रुतार्थापत्त्या कल्प्यन्ते । तेन विशिष्टविधौ विशेषणविधयः पूर्वसम्बन्धमात्रेणैवोपयुज्यन्ते । यथा—जीवतो गृहाभावे बहिर्भावः । यथा वा–शब्दार्थव्युत्पत्तौ व्यक्तौ व्यवहारदर्शनात्प्रथमं

व्यक्त्यर्थत्वमवगम्यते । तत्राकृत्यर्थत्वं प्रागनवगतमपि सत्तामात्रोपयोगि पश्चात्त्वानन्त्यव्यभिचाराभ्यां व्यक्तेरवाच्यत्वादाकृतेर्वाच्यत्वं निश्चीयते, न चेतरेतराश्रयत्वम्, तथेहापि । तदुक्तम्—

विशेषण[1]विचारोऽयं पश्चाद्यद्यपि गम्यते ।
तथापि त्वाकृतिन्यायात्ततः प्रागेव जायते ॥ इति ।

( तं. वा., पृ. ४८५ )

ततश्चाग्नेयादिवाक्यैर्विशिष्टापूर्वभावनाविधौ न वाक्यभेदः । तेन तद्वाक्यविहितकर्मसमुदायानुवादत्वमेव विद्वद्वाक्ययुगलस्येति । तदुक्तम्—

अपूर्व[2]त्वाद्विधानस्य प्रकृते शब्दशक्तितः ।
तत्रैव रूपलाभाच्च समुदायानुवादता ॥ इति ।

(तं. वा., पृ. ४८६)

इदन्त्विह वक्तव्यम्—किं पुनः समुदायानुवादस्य प्रयोजनम् ? तदुच्यते—फलवाक्ये हि "दर्शपूर्णमासाभ्याम्" इति वचनाद्द्वयोः करणत्वमुपजातम् । न च तत्कर्मस्वरूपापेक्षम्, तेषां बहुत्वात् । नापि राजसूयत्फलापेक्षम्, तथा सति 'राजसूयेन' इतिवदेकवचनत्वप्रसङ्गात् । न चोत्पत्तिवाक्यगतकालद्वयापेक्षम् । तथाप्यन्तर-

---

१. विशेषणविधिश्चायमिति मुद्रितपुस्तकपाठः ।

२. अरूपत्वादिति मुद्रितपुस्तकपाठः ।

ङ्गत्वेनैवैकवचनत्वप्रसङ्गादेव । यत्तु 'सुपां सुपो भवन्ति' इति बहुवचनस्थाने एकवचनमेकस्मिन्वाक्ये द्विवचनमित्युक्तम्, अगत्या ह्यर्थसाधुत्वासम्भवात्प्रयोगसाधुत्वमात्रार्थं तथाश्रितम् । इह तु विद्वद्वाक्ययुगलापादितसमुदायद्वित्वश्रवणेनैवार्थसाधुत्वसम्भवे सति न प्रयोगसाधुत्वमात्राश्रयणम् । तथाहि—त्रयाणामाग्नेयाग्नीषोमीयोपांशुयाजानामेकपौर्णमासीकालसम्बन्धात्तथा त्रयाणामाग्नेय ऐन्द्रं दध्यैन्द्रं पय इत्येषामेकामावास्याकालसम्बन्धात् त्रयाणां त्रयाणामेकैककालसम्बन्धानां विद्वद्वाक्ययुगलेन फलवाक्यापेक्षित-द्वित्वसिध्यर्थं समुदायानुवादः प्रयोजनवानेवेति । तदुक्तम्—

यथैवोत्पत्तिवाक्यानां प्रयोगवचनाङ्गता ।
तथैव तदुपादानाद्विद्वत्वसिध्यानयोरपि ॥ इति ।

( तं. वा., पृ. ४७६ )

ननु पौर्णमास्यमावास्यानामावच्छिन्नसमुदायस्य कथं दर्शपूर्णमासशब्दाभ्यामुपादानम् ? अत्र पूर्णमासशब्देन तद्विकारः पौर्णमासीशब्दो लक्ष्यते । एवन्तर्हि दर्शशब्देन विरुद्धलक्षणायैवादर्शनाच्चन्द्रमसोऽमावास्या प्रतिपाद्यत इत्युच्यते । तदा किमपराद्धं 'सुपां सुपो भवन्ति' इत्यनुशासनबलेनैकवचनस्थाने द्विवचनं बहुवचनस्य वेति । मैवम्; समुदायानुवादवाक्यद्वयस्यानन्यप्रयोजन-साध्येन विधिना फलवाक्यगतद्विवचनान्तदर्शपूर्णमासपदप्रवृत्ति-

सिध्यर्थमेवाध्यापितत्वात् क्लेशेनापि तदुपादानं न दोषाय। पूर्वपक्षे तु नैवंविधं किञ्चिदस्ति निमित्तमिति वैषम्यम्। एवञ्च षराणामेव फलसम्बन्धेन विहितत्वादितरेषामाघारादीनां फलवत्सन्निधिन्यायेन तदङ्गत्वमेव भवतीति सिद्धान्तस्य प्रयोजनम्।

सूत्रन्तु— प्रक्रियत इति प्रकरणम्, तेनाग्नेयादिकर्माभिधीयते। पौर्णमास्यामित्यनेन पौर्णमास्यापदयुक्तविद्वद्वाक्ययुगलमुपलक्षयति। तेनायमर्थः—अस्मिन्वाक्यद्वये प्रकृतमेव कर्म प्रतिपाद्यम्, न तत्पूर्वकर्मद्वयम्। रूपावचनाद्द्रव्यदेवतासम्बन्धप्रतिपादकशब्दाभावादित्यर्थः॥

इति तृतीयं पौर्णमास्यधिकरणम्॥ ३॥

अथ चतुर्थमुपांशुयाजधिकरणम्

## पौर्णमासीवदुपांशुयाजः स्यात्॥ २. २. ६.॥

(विषयसंशयसङ्गतयः)

"जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति" (तै. सं., २. ६. ६.) इति। तथा—"विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्योऽजामित्वाय" इति। तत्र सन्देहः—किं विधायका-

द्विगुणकानां प्रकृतानां यागानां समुदायानुवादकम् ? उता-पूर्वस्य यागस्य ? इति । इदानीमधिकरणत्रयेण पौर्णमास्यधि-करणोक्तसमुदायानुवादे कर्त्तव्ये सर्वात्मना पौर्णमास्यधिकरण-सिद्धान्तोपजीवनादुपांशुयाजपूर्वपक्षस्यानन्तरमारम्भः ।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यथा पौर्णमास्यधिकरणे रूप-वतामाग्नेयादीनां सन्निधिसमाम्नातस्य विद्वद्वाक्ययुगलस्य रूपाभा-वादाग्नेयादिसमुदायानुवादकत्वम्, तथेहापि "उपांशुयाजमन्तरा यजति" इत्यस्य विष्णवादिवाक्यविहितप्रकृतकर्मसमुदायानुवादक-त्वम् । तथाहि—विष्णवादिवाक्यानां तव्यप्रत्ययवशाद्विधित्वं तावदसन्दिग्धम्, देवता च विष्णवादिपदैः प्रतीतैव । द्रव्यमपि ध्रौवाज्यम् । उपांशुयाजवाक्ये वर्त्तमानसरूपाद्विधित्वमेव ताव-त्सन्दिग्धम् । यथाकथञ्चिद्ध्रौवाज्यप्राप्तावपि न देवता समस्ति । न चोपांशुयाजक्रमसमाम्नातमन्त्रसम्बन्धाद्देवतालाभः, विष्णवादि-देवताप्रकाशका मन्त्रा यागेष्वेव लिङ्गबलेन सम्बध्यन्ते, नान्तरा-वाक्ये । न च कर्मानुशिष्टतव्यप्रत्ययेन विष्णवादिदेवतानामेव कर्त्तव्य-तावगमाच्च यागविधानमिति वाच्यम् । यजतीत्यादावुपसर्जनस्यापि यागस्य प्राधान्यावगतदेवताविशिष्टस्यागतया प्राधान्यविधानात् ।

न चात्र गत्यन्तरमस्ति । अन्तरालविध्यभावाद्रूपाभावाच्च कर्माविधायकत्वस्योक्तत्वात् । तदुक्तम्—

यागान्विष्णवादिसंयुक्तैर्विहितान् रूपवत्तया ।
अरूपमन्तरायुक्तमगत्यैवावलम्बते ॥ इति ।

(तं. वा., पृ. ४८६.)

न चान्तरालवाक्यस्यानुपादेयत्वात्तस्यैव कर्मणा उपादानादनुपादेयत्वेनान्तरालवाक्य एव कर्मणो विधेयत्वमिति वाच्यम् । बुद्धिविच्छेदे हि सत्यनुपादेयं प्रत्युपादानं प्रकरणान्तरन्यायेन कर्मभेदकं भवति । न चात्र बुद्धिविच्छेदोऽस्ति । विष्णवादिवाक्योत्पादितस्यैव सन्निधानात् । ननु जामितोपक्रममजामित्वावसानमेकं वाक्यमवगम्यते । जामित्वाजामित्वयोरेकविषयत्वात् । तच्चैवं सम्भवति—यद्यन्तरालवाक्यस्य विधायकत्वं विष्णवादिवाक्यानाञ्चार्थवादत्वम् । विष्णवादिवाक्यानां विधायकत्वे विधिभेदेन वाक्यभेदादवगतैकवाक्यत्वं विहन्यते । एकवाक्यसम्भवे हि वाक्यभेदो दोष एवेति । अत्र चान्तरालवाक्यस्याविधायकत्वस्योक्तत्वाद्विष्णवादियुक्तानां विधायकत्वं, तथा सति भिन्नविधिप्रयोजनत्वेन वाक्यभेदस्यैव प्रमाणबलादायातत्वान्न दोषावहत्वम् । यच्च जामित्वाजामित्वयोरेकविषयत्वम्, तद्भिन्नवाक्येऽपि जामित्वे तस्य त्वनुषङ्ग-

कल्पनया अवरुद्धत्वम् । तेन यथा "तनूः"[1] (मै. सं., १. २. ७.) इत्यस्य तन्त्रोच्चारितस्यैव "रजाशया हराशया" इत्येतत्सम्बन्धः, तथा जामित्वस्यापि विष्णवादियुक्तवाक्यत्रयेऽपि तन्त्रेण सम्बन्धः । न च वाक्यसम्बन्धिजामितोपक्रमात्तस्यान्तरालवाक्यव्यवहितस्य कथं विष्णवादिवाक्यैस्सम्बन्धः । अन्तरालवाक्यस्यापि तदनुवादकत्वेन तद्व्यवधायकत्वाभावात् ।

ननु भवतु विष्णवादिवाक्यानां कर्मविधायकत्वम् । अन्तरालवाक्यस्य तु कथं सर्वानुवादकत्वम् ? अन्तरालस्यैवाप्राप्तत्वेन विधानात् । मैवम् ; जामितासङ्कीर्त्तेर्विष्णवादिवाक्येऽप्यजामित्वानुवादेनान्तरालकालस्यापि प्राप्तत्वात् । भवति चानुवादतोऽपि स्थाननियमः । यथा—"न गिरा गिरेति ब्रूयात्" इति गिरापदनिषेधानुवादबलादिरापदस्थाननिवेशित्वमिति न किञ्चिदेतत् । अनुवादप्रयोजनञ्च "उपांशुयाजमन्तरा यजति" इत्यनेन विष्णवादियुक्तकर्मणां सर्वेषामुपांशुयाजनामत्वं भवति । तथाच सति "उपांशु पौर्णमास्यां यजन्" इति संज्ञैकदेशेनानूदितानां पौर्णमासीकालसम्बन्धः । ततश्च फलवाक्ये सर्वेषामेवोपादानमिति । अतः

---

१. तनूवर्षिष्ठा गह्वरेष्ठा उग्रं वचोऽपावधीत्त्वेषं वचो अपावधीत्स्वाहेति मन्त्रः ।

पौर्णमासीवत् "उपांशुयाजमन्तरा यजति" इत्येतदपि वाक्यं समुदायानुवादकमेवेति । एवं प्राप्ते ब्रूमः—

चोदना वाऽप्रकृतत्वात् ॥ २. २. १०. ॥

( सिद्धान्तः )

भवेदेवं यदि विष्णवादिवाक्यैर्यागविधानं भवेत् । न चैतदस्ति । तथाहि—यथा "वैश्वानरं द्वादशकपालं निर्वपेत्" (तै. सं., २. २. ५. ३. ) इत्युपक्रम्य "यद्द्वादशकपालो भवति" इत्यादिना द्वादशकपालस्यत्र स्तुतिदर्शनादुपक्रमोपसंहारयोरेकविषयत्वे सति तदन्तर्गतानामष्टत्वादीनां न पृथग्विधिविषयत्वम्, तथात्रापि 'जामि वा एतद्यज्ञस्य क्रियते" इत्युपक्रमे पुरोडाशयोर्जामितादोषोपक्रमादन्ते च तदपनयनरूपाजामित्वोपसंहारादेकवाक्यत्वम् । तच्च तदैव सम्भवति, यद्येकस्यैव विधित्वमितरेषामर्थवादत्वम् । उपक्रमस्थजामित्वदोषश्चान्तरालसम्बन्धिकर्मविधानमेवापेक्षते । तस्यैव जामित्वदोषापनयनहेतुत्वात् । तथाभूतश्च "उपांशु याजमन्तरा यजति" इति वाक्यम् । ततस्तदेव विधायकं, विष्णवादियुक्तानाञ्चार्थवादत्वमेव निर्णीयते ।

यत्तूक्तम्—यथा "तनूः" इति पदस्य तन्त्रोच्चारितस्यैव रजाशयाहराशयावाक्यसम्बन्धः, तथा जामित्वस्यापि तन्त्रो-

च्चारितस्य विष्णवादिवाक्यत्रयसम्बन्धात्प्रत्येकमेवोपक्रमोपसंहारयोरेकविषयत्वमिति । तदयुक्तम् ; तत्र ह्येकवाक्यबलेन विष्णवादियुक्तानामन्तरालयुक्तविधिशेषत्वासम्भावाद्वाक्यभेदे सत्यवश्यं कल्पनीयत्वात्पदान्तरसम्बन्धस्याध्याहारात्तन्त्रोच्चारितपदान्तरकल्पनाया एव लघुत्वात्तथाश्रितमिति जानीमः । इदन्तु प्रथमावगतैकवाक्यबलेन विष्णवादियुक्तानामन्तरालयुक्तविधिविशेषत्वेनैव वाक्यान्तरत्वासम्भवान्नोपक्रमस्य तन्त्रत्वकल्पनायां प्रमाणमस्ति । एवञ्च सत्यर्थवादसम्बन्धाद्विधित्वमसन्दिग्धम् । न च रूपाभावान्न कर्मविधित्वमिति वाच्यम् । तथाहि—द्रव्यं तावत्साधारणं ध्रौवमेवाज्यमिति । देवतापि च मान्त्रवर्णिकी । उपांशुयाजक्रमे हि वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलान्याम्नायन्ते । तैश्च तुल्यार्थतया विकल्प्यमानैर्वैकल्पिक्य एव देवताः प्राप्यन्ते । न ह्यन्यथा क्रमावगता मन्त्रा अङ्गभावं प्रतिपद्यन्ते । समवेतार्थप्रकाशनेनैव मन्त्रस्याङ्गत्वात् न चैकवाक्यानुरोधेनार्थवादस्यैव देवतासमर्पकत्वमिति वाच्यम् । अर्थवादानां लाक्षणिकस्तुतिपरत्वेन मुख्यार्थस्तुतिपरत्वाभावात् । उभयत्र तात्पर्ये वाक्यभेदप्रसङ्गात् । न च गत्यन्तरं नास्तीति नार्थवादत्वेन सम्बन्धः । किञ्च "विष्णुरुपांशु यष्टव्यः" इत्याद्यभिधानादुपसर्जनीभूतो यागः प्रतीयते, विष्णवादयश्च प्रधानतया । यागा-

भ्युपगमे च विष्णुदेवताको यागः कर्त्तव्य इति निष्कृष्य रूपभङ्गेन यागे विष्ण्वाद्योऽप्रधानभूता इत्यर्थात्कल्पनीयम् । न च "उपांशुयाजमन्तरा यजति" इति यागस्य प्राधान्येन प्रत्यक्षविधौ सति कल्पनामर्हति । "विष्णुं यजति" इत्यादिष्वगत्योपसर्जनार्थविधिपरत्वमपि स्वीकृतम् । अत्र त्वन्तरालवाक्यस्यैव विधित्वेन गतिसम्भवाद्वैषम्यम् । अतोऽन्तरालवाक्यस्यैव, विष्ण्वादिवाक्यानान्त्वर्थवादत्वम् । तदुक्तम्—

विष्ण्वादियागसम्बन्धे कृते यागोऽर्थतो भवेत् ।
उपसर्जनभूतश्च श्रौते चैतन्न युज्यते ॥ इति ।

(तं. वा. पृ. ४६१)

अतस्सर्वथा विष्ण्वादिवाक्यानां विधित्वासम्भवादन्तरावाक्यस्यैव कर्मविधायकत्वम्, न त्वर्थवादत्वमिति सिद्धम् ॥

प्रयोजनम्—पूर्वपक्षे वैष्णवादिकर्मत्रयानुष्ठानम् । सिद्धान्ते त्वेकस्यैवेति ।

सूत्रन्तु—अन्तरावाक्ये कर्मचोदना विष्ण्वादिवाक्यानामविधायकत्वेन कर्मणामप्रकृतत्वादिति । तदुक्तम्—

प्रकृतानामसद्भावादूम्यते नानुवादता ।
यागो विष्ण्वादिसंयुक्तैर्न हि वाक्यैर्विधीयते ॥ इति ।

(तं. वा., पृ. ४६०)

अत्र केचित् "तावब्रूतामग्नीषोमावाज्यस्यैव नानुपांशु पौर्णमास्यां यजन्" इत्येतदेवोपांशुयाजस्योत्पत्तिवाक्यमिति वदन्ति। अयञ्च तेषामभिसन्धिः—अत्र तावद्द्रव्यदेवताकालोपांशुत्वविशिष्टो यागः प्रतीयते। विधेश्चात्र विध्यन्तरशेषत्वाभावेनानुवादत्वासम्भवात्परेणापि पौर्णमासीकालविधानार्थमवश्यं कल्पनीयः। स चात्र रूपसमानयागलाभसौकर्य्याद्द्रव्यादिविशिष्टयागविषय एव कल्पनीयः। अन्तरालवाक्ये तु कर्मोत्पत्तौ द्रव्यदेवतादिक्लेशेन कल्पनीयम्। किञ्च पौर्णमासीकालसम्बद्धाग्नेयाग्नाषोमीयपुरोडाशद्वयान्तरालक्रियमाणे उपांशुयाजे आग्नेयादौ च पौर्णमासीकालस्य प्राप्तत्वात् "तावब्रूताम्" इति वाक्यमनर्थकमेव भवेत्। अनेन तु विशिष्टकर्मविधावन्तरालस्याप्राप्तत्वात्तद्विधानेनैवान्तरालवाक्यमर्थवदिति। तेन तावब्रूतामित्येतदेवोपांशुयाजोत्पत्तिवाक्यम्। अन्तरावाक्यन्त्वन्तरालविधायकमेवेति। एवञ्च सति सर्वेषामेवोत्पत्तौ कालसम्बन्धस्याविशेषादेकरूपतया समुदायानुवादवाक्येन "य एवं विद्वान्" इत्यादिना ग्रहणमुपपन्नं भविष्यतीति।

तदयुक्तम्; अर्थवादसरूपं तावदिदं वाक्यम्। सर्वत्र चानुवादपूर्वं प्रतीतिहेतुगवेषणमेव प्रथमं प्रमातॄणां भवति। तदलाभे रूपभङ्गेन कल्पितविधिनानूद्यमानतया प्रतीयमानो विधीयत इति स्थितम्। तत्र पूर्वप्रतीतिहेतुगवेषणा "उपांशुयाजमन्तरा यजति"

इति सन्निहिते प्रत्यक्षयागविधिदर्शनान्न तावद्यागविधिः कल्पयितुं शक्यते । तेन विशिष्टयागविधानासम्भवादेक एव गुणो विधातव्यः, प्राप्ते कर्मण्यनेकगुणविधाने वाक्यभेदात् । तत्राज्यस्यापि ध्रुवावाक्यप्राप्तत्वान्न विधानम् । देवता चात्र प्रतीयत एव । अग्नीषोमसम्बन्धे तद्धितचतुर्थ्योरश्रवणादग्नीषोमाविति प्रथमाद्विवचनेन प्रातिपदिकार्थमात्रविधानात्सत्यपि वा देवताप्रत्यये मन्त्रवर्णप्राप्तानुवादत्वेनैवोपपत्तौ न विधित्वम् । उपांशुत्वमप्यन्तरावाक्यप्राप्तं न विधेयम् । न चोपांशुयाजपदस्य नामत्वान्नोपांशुत्वमन्यतो लब्धमिति वाच्यम् । यतः समभिव्याहारमात्रेणान्तरालवाक्ये नामत्वं स्फुरति । वस्तुतस्तु तत्प्रख्यशास्त्रान्तराभावात् अर्थवादस्य चाविधायकत्वात् याजशब्देन नानुवादः, उपांशुत्वञ्च विधीयत एवेति । तदुक्तम्—

न च तत्प्रख्यरूपेण नामैतदुपपद्यते ।
विहितं न ह्युपांशुत्वं शास्त्रेणान्येन केनचित् ॥ इति ।

(तं. वा., पृ. ४६४)

अतः पौर्णमासीकाल एवाप्राप्तत्वादत्र विधीयत इति युक्तम् । ननु तस्यापि पुरोडाशद्वयान्तरालविधानेनार्थप्राप्तत्वात्तद्विधानमपि व्यर्थम् । नैवम् ; यदि पौर्णमासीकालविधिर्न स्यात् "उपांशुयाजमन्तरा यजति" इत्यत्र पुरोडाशद्वयान्तरालाभावादुपांशुयाजो न

भवेत्। यदा त्वन्तरालात्तेपलभ्येऽपि पौर्णमासीकाले केवलं पौर्णमासीकालविधानम्, तेनैतज्ज्ञायते—अन्तरालापेक्ष एव पौर्णमासीकाल उपांशुयाजाङ्गान्तरालशब्दस्य चाग्नेयोत्तरकालोपलक्षणत्वमिति। तस्य च कालस्यैकपुरोडाशायामपि पौर्णमास्यां सद्भावाद्युक्तमुपांशुयाजानुष्ठानम्। एतदेव दशमे वक्ष्यति—'अनपायो हि कालस्य लक्षणं हि पुरोडाशौ' (जै. सू., १०. ८. ६९.) इति। अतो वा नायं कालविधिरिति। एवं वदता न्यायान्तरविरोधोऽपि नाकलितः। एवं हि वक्ष्यति जैमिनिः—'तद्वच्च देवतायां स्यात्' इति। अनेन सूत्रेणोपांशुयाजे यथा द्रव्ये अनियमः, तथा देवतायामप्यनियमः पूर्वपक्षे प्रतिपाद्यते। तदेतदुभयमपि नोपपद्यते। अन्तरालवाक्ये हि कर्मोत्पत्तौ द्रव्यदेवतयोरनियमः सम्भाव्यते। तत्र द्रव्यदेवतयोरश्रवणात् "तावब्रूताम्" इत्यत्रोपांशुयाजोत्पत्तौ स्ववाक्य एव द्रव्यदेवतयोर्लाभादनियमाशङ्का कुतः? तथा—"विष्णुर्वा स्याद्धौत्राम्नानसामर्थ्यात्' (जै. सू., १०. ८. ५३) इति तथा "ध्रौवाद्वा सर्वसंयोगात्" (जै. सू., १०. ८. ४८.) इति च। सिद्धान्तेऽपि मान्त्रवर्णिकदेवतालाभो वाक्यान्तरावगतध्रौवाज्यलाभे सति सम्भवति, न तूत्पत्तिगतद्रव्यदेवतालाभे सतीति यत्किञ्चिदेतदिति यथावार्त्तिकमन्तरालवाक्यमेवोत्पादकमिति साधीय इति॥

इति चतुर्थमुपांशुयाजाधिकरणम्॥ ४॥

## अथ पञ्चममाघाराग्निहोत्राधिकरणम्

## आघाराग्निहोत्रमरूपत्वात् ॥ २. २. १३ ॥

### (विषयसंशयसङ्गतयः)

"आघारमाघारयति" (तै. ब्रा., ३.३.७.) इति श्रूयते। तथा—"ऊर्ध्वमाघारयति, ऋजुमाघारयति, सन्ततमाघारयति" इति। इदञ्च—"अग्निहोत्रं जुहोति" (तै. सं., १.५.६.) तथा—"दध्ना जुहोति पयसा जुहोति" इति। तत्र सन्देहः—किमूर्ध्वमाघारयति दध्ना जुहोतीत्यादिभिराघारा होमाश्च विहिताः, तेषाम् "अग्निहोत्रं जुहोति, आघारमाघारयति" इत्येतौ समुदायानुवादौ ? उतापूर्वयोराघारहोमयोर्विधाताराविति। पूर्वमेव वाक्यत्वानुरोधेन विध्यावादियुक्तानामर्थवादत्वेनैवान्वयोपपत्तेरन्तरावाक्यस्यैव विधित्वं न समुदायानुवादकत्वमित्युक्तम्। इह तु तथाभूतहेत्वभावात्पुनः प्रत्यवतिष्ठते।

### ( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—"आघारमाघारयति" इत्यनेन सह "ऊर्ध्वमाघारयति" इत्यादीनां न तावदेकवाक्यत्वं प्रतीयते। नापि "अग्निहोत्रं जुहोति" इत्यनेन सह "दध्ना जुहोति" इत्यादीनां तावत्स्तुतिः प्रकाश्यते। अतो नार्थवादत्वम्। तेनोर्ध्वा-

दियुक्तवाक्यानामूर्द्ध्वादिगुणविशिष्टाघारकर्मविधायकत्वम्, दध्यादियुक्तानाञ्च दध्यादिगुणविशिष्टहोमविधायकत्वमिति। तदुक्तम्—

न चैषामेकवाक्यत्वं न च स्तुतिपरा श्रुतिः।
ऐकाग्निको विधिस्तेन गुणवत्कर्मगोचरः॥ इति।

(तं. वा., पृ. ४६७)

तथा सत्यूर्द्ध्वादियुक्तवाक्यविहितानामाघारकर्मणां "आघारमाघारयति" इति समुदायानुवादः। मैवम्; केवलस्य गुणविधानासम्भवात्। प्रवर्त्तनात्मको हि विधिः क्रियायामेव पुरुषं प्रवर्त्तयति। गुणश्च न क्रिया। अतः कथं गुणो विधीयते? किञ्च न गुणपदस्थो विधिः श्रूयते, किन्तु आख्यातपदस्थः। स च समानपदस्थधात्वर्थभावनापरित्यागेन न पदान्तरस्थं गुणं विधातुमुत्सहते। न च गुणस्य कारकतया भावनाविशेषणत्वाद्भावनास्थेनापि विधिना गुणो विधास्यत इति वाच्यम्। यतस्तत्रापि किं भावनां विहाय निष्कृष्ट एव गुणः कारकतया विधातव्यः? उत भावनाकारतया वा? न तावन्निष्कृष्टो गुणो विधातुं शक्यते, विधेः क्रियाश्रयत्वस्योक्तत्वात्। भावनाकारकतया च विधानं भावनामन्तरेण न सम्भवतीति भावनाविशिष्टो विधीयत इत्युपपद्यते। तेन वस्तुतः शब्दतश्च सर्वत्र गुणविशिष्टभावनावि-

धानमेव वाच्यम् । न तु क्वापि केवलगुणविधानमिति ।

तदुक्तम्—

विधित्वं प्रत्ययोपात्तं न नामपदमृच्छति ।
तद्विधिर्भावनातश्चेत्सैव पूर्वं विधीयताम् ॥ इति ।

( तं. वा., पृ. ४६७ )

ननूद्भादिवाक्येषु न द्रव्यं नापि देवता समस्ति । दध्यादि-युक्तवाक्येषु च द्रव्यसद्भावेऽपि देवता नास्ति । द्रव्यदेवते हि कर्मणो रूपम् । अतः कथमेभिः कर्मविधानम् ? कथं वा "आघारमाघार-यति" "अग्निहोत्रं जुहोति" इति वाक्यद्वयेन समुदायद्वयानुवाद इति निश्चीयते ? न च वाच्यम्—"चतुर्गृहीतं वा एतदभूत्तस्याघारमा-घार्य" इत्यनेनाघारेष्वाज्यद्रव्यविधानम् । "इत इन्द्र ऊर्ध्वो अध्वर इत्याघारमाघारयति" इत्यनेन विहितमन्त्रद्वारेण मान्त्रवर्णिकी देवताप्राप्तिः, तथा "यदग्नये च प्रजापतये च सायं जुहोति" "यत्सू-र्याय च प्रजापतये च प्रातर्जुहोति" इत्येताभ्यां दध्यादिहोमेषु काल-भेदेन देवताविधानमिति । यतो नात्रत्यपूर्वपक्षी केवलगुणविधानं किञ्चिदपि पश्यति । सर्वत्रैव विधेः क्रियाश्रयत्वस्योक्तत्वात् तेन सर्वाण्येवैतानि वाक्यानि गुणविशिष्टविधायकान्येव, न तु वाक्यान्तरस्थक्रियानुवादेन क्वचिद्देवतालक्षणगुणविधायकानि । अतोऽत्र यस्मिन्वाक्ये क्रियापदमस्ति, तत्र सैव क्रिया गुणविशिष्टा

विधीयते । यत्र नास्ति तत्राध्यहृतैव क्रिया गुणविशिष्टा विधीयते । न चैवं सति विशिष्टविधावपि गुणस्याक्रियारूपत्वेन विधिसंस्पर्शाभावात् कथञ्चिद्विशेषणीभूतगुणोपादानमिति वाच्यम् । यतोऽत्रत्यः पूर्वपक्ष्येवं मन्यते—निष्कृष्टगुणविधानं हि न सम्भवति । यदा तु भावनास्थो विधिरेकेनैव व्यापारेण भवनाविधानं सकलविशेषणविशिष्टमेव विधत्ते, न तु विशिष्टविधिं कल्पयति, तदा न किञ्चदनुपपन्नम् । अतः कथं पूर्वपक्षः ? इति ।

उच्यते—सत्यमेवम्, तथाप्याकांक्षावशात्परस्परद्रव्यदेवतानुषङ्गेण सर्वेषामेव वाक्यानां द्रव्यदेवताविशिष्टकर्मविधायकत्वाद्द्रव्यदेवतालाभो नानुपपन्नः । तेन यानि वाक्यान्याघाराग्निहोत्रयोर्गुणविधायकत्वेन सिद्धान्तिनोऽभिमतानि तानि सर्वाण्यन्योन्यानुषङ्गद्रव्यदेवताभिधायिपदानि विशिष्टविधायकानि । न चैवं सति आघाराग्निहोत्रवाक्ययोरपि द्रव्यदेवताभिधायिपदानुषङ्गेण कर्मविधायकत्वान्नानुवादकत्वमिति वाच्यम् । यतो वर्त्तमानापदेशरूपमिदं वाक्यद्वयम् । न चावश्यं पञ्चमलकारत्वेन विधित्वाभिव्यञ्जकार्थवादस्समस्ति । न चात्रानुवादानर्हमूर्द्ध्वादिस्थानीयं दध्यादिस्थानीयं वा गुणान्तरमस्ति । नाम्नश्चानूद्यमानविशेषप्रतिपत्तिहेतुत्वेनाप्युपपत्तेः । तेनोर्द्ध्वादिवाक्यविहितकर्मसमुदायद्वयानुवादः । एवञ्चाघाराग्निहोत्रवाक्याभ्यामिति निश्चीयते । समुदायद्वयानुवादप्रयोजनन्तु

अग्निहोत्रे एकसमुदायापन्नानामेकवचनेन "अग्निहोत्रं जुहुयात् स्वर्गकामः" तथा "यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादिभिः फलनिमित्तयोर्विधानसिद्धिरिति सुष्ठूक्तमेव। आघारेऽग्निहोत्रे "पञ्च प्रयाजान्यजति" इतिवत्संज्ञोपबन्धार्थ एवायं समुदायानुवादः। संज्ञोपबन्धप्रयोजनश्च सिद्धान्तवदेवेति स्वतः परतश्च कर्मविधित्वा-पादकरूपोपलम्भाभावादाघाराग्निहोत्रवाक्ययोस्समुदायद्वयार्थवादत्व-मिति। एवंप्राप्तेऽभिधीयते—

**चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेर्गुणार्थेन-पुनः श्रुतिः ॥ २. २. १६. ॥**

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि "आघारमाघारयति, अग्निहोत्रं जुहोति" इति वाक्यद्वयेन कर्मद्वयं न विधीयेत। ऊर्ध्वादिसंयुक्त-वाक्यैर्दध्यादिसंयुक्तवाक्यैर्वात्र गुणो विधातुं न शक्यते। तथा-हि—आघाराग्निहोत्रवाक्याभ्यां तावन्नामावच्छिन्नः कर्मविशेषः प्रति-पाद्यते। नासौ वर्त्तमानापदेशपञ्चमलकारसन्देहान्न विधीयते, प्रयोग-वचनोपसङ्ग्रहेणैवास्य पञ्चमलकारत्वनिर्णयात्। न च पौर्णमासी-वद्यच्छब्दाद्युपबन्धोऽनुवादकारणमस्ति। तेनानन्याक्षिप्तशक्तिरयं विधिः कर्मैव विदधाति। नाप्यूर्ध्वादिसंयुक्तैर्वाक्यैर्गुणो विधातुं न शक्यते। यतः सर्वत्र भावनास्थ एव विधिर्योग्यमुपपदार्थमी-

क्षमाणो विशिष्टविधिगौरवात् वाक्यान्तरविहिते कर्मणि गुणं विधत्ते। न चात्र वाक्येऽनेकगुणश्रवणमस्ति । न च प्रकृते कर्मणि गुणावरोधोऽस्ति। तेनैषामव्याहतमेव गुणविधित्वम्। न च वाच्यम्—क्रियाविषयो विधिर्गुणश्च न क्रियेत्युक्तम्। अतः कथं गुणविधानमिति । यतोऽत्रापि क्रियैव विशिष्टा विधीयत इति ब्रूमः। न च प्राप्तत्वान्न विधीयते, गुणविशिष्ट-भावनाया अप्राप्तत्वात् ।

ननु प्राप्ते कर्मणि विधिश्चात्र गुणसङ्क्रान्तः, किन्तर्हि गुण-विशिष्टकर्मविषयः? तेनाप्राप्तस्वर्गविधिवत्प्राप्ते कर्मणि विशिष्ट-विधिन्यायेनैवानेकगुणविधानोपपत्तेः 'चोदिते हि तदर्थत्वात्तस्य त-स्योपदिश्येत' ("जै. सू., २. २. ६.) इत्यनर्थकमापद्यते । मैवम्; यदि भावनास्थोऽयं विधिर्भावनास्वरूपं प्रति प्रवृत्तिप्रयोजनत्वेन गृह्यते, तदाक्षिप्तविशेषणविधौ सत्यवाक्यभेदो भवत्येव। यदा तु भावनास्वरूपस्य प्राप्तत्वाद्गुणविशिष्टभावनाविधिस्तदा-ऽनेकगुणसन्निधानेऽपि यस्यैव गुणस्य भावनया सह विशेषण-विशेष्यभावप्रतिपादनपरोऽयं विधिस्तस्यैव प्रतिपादयेत्, नेत-रस्यापीति तदर्थं विध्यावृत्तौ वाक्यभेद एवेति। तदुक्तम्—

विधित्वे भावनास्थेऽपि तादर्थ्यं प्रविभज्यते।
विशेषणफले चास्मिन्वाक्यभेदो भविष्यति ॥ इति।

(तं. वा., पृ. ५०३)

तेन प्राप्ते कर्मणि तदनुवादेन गुणो विधीयत इति यदेतत् तत्र तत्रोच्यते, तद्भावनास्वरूपस्य प्राप्तत्वात्तद्गतविधितात्पर्याभावेन गुणविशिष्टाया अप्राप्तत्वात्तद्गतैवेति तात्पर्याभिप्रायेणेति मन्तव्यम्। यत्त्वेकस्यैव विधेः विशेष्ये विशेषणे च तात्पर्यमित्युक्तम्, यतो विशेष्यत्वं हि प्रधानत्वं, विशेषणत्वञ्च तद्गुणत्वम्। न च सकृच्छ्रुतस्य विधेर्वैरूप्यं सम्भवतीति नैकस्योभयतात्पर्यत्वमिति। न च द्रव्यदेवतयोरभावादाघाराग्निहोत्रवाक्ययोर्होमविधानमिति वाच्यम्। वाक्यान्तरविहितद्रव्यदेवतासद्भावेन होमविधिनिर्वाहात्। तथाहि—आघारे तावत् "चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य" इति वचनेन चतुर्गृहीताज्यविधानाद्द्रव्यं प्राप्तमेव। "ऊर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान्स्वाहा इत्याघारमाघारयति" इति। वचनेन मन्त्रविधानान्मान्त्रवर्णिकदेवतालाभः। तथा अग्निहोत्रेऽपि दध्यादिवाक्यैर्द्रव्यविधानं स्फुटमेव। तथा "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोति" इति वचनद्वयविहितमन्त्रद्वयवशेन सायंप्रातर्होमयोर्मान्त्रवर्णिकाग्निसूर्यदेवताप्राप्तिः। तथा "यदग्नये च प्रजापतये च सायं जुहोति, यत्सूर्याय च प्रजापतये च प्रातर्जुहोति"॥ इति वचनद्वयेन सायंप्रातर्होमयोरेव प्रजापतिदेवतान्वयः। तेन सायं होमेऽग्निश्च प्रजापतिश्च देवता। प्रातर्होमे सूर्यश्च प्रजापतिश्च देवतेति।

न च "यदग्नये च प्रजापतये च, यत्सूर्याय च" इति वचनद्वये-नैवाग्निप्रजापत्योः सूर्य्यप्रजापत्योश्च सायं प्रातर्होमयोर्विधानमिति वाच्यम्। प्राप्ते कर्म्मण्येकेन वाक्येन नानेकगुणविधानं सम्भवति। अन्यपरविधाने सति अग्निसूर्य्ययोर्मान्त्रवर्णिकप्राप्तिदर्शनेन प्रजापतिमात्रविधानात्। अतो वाक्यद्वये प्रजापतिरेवैको विधीयते। अन्यत्सर्वमनूद्यत इति।

प्रयोजनं पूर्वपक्षे-आघाराणां होमानां बहूनामनुष्ठानम्, सिद्धान्ते तु नैवमिति।

सूत्रन्तु—आघाराग्निहोत्रयोः कर्मचोदना कर्मविधानं भावनारूपस्य शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेः भावनासन्निधानाद्गुणार्थेन गुणविधानार्थेन पुनःश्रुतिर्विधेः पुनरुच्चारणमित्यर्थः॥

इति पञ्चममाघाराग्निहोत्राधिकरणम्॥ ५॥

### अथ षष्ठं पशुसोमाधिकरणम्

## द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥२.२.१७॥

( विषयसंशयौ )

ज्योतिष्टोमे श्रूयते "यो दीक्षितो यदग्नीषोमीयं पशुमालभते" (तै. सं., ६.१.११) इति। तथा "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" (तै. सं., ६.३.१०.) इति। तथा "सोमेन यजेत"—"ऐन्द्रवायवं गृह्णाति, आश्विनं गृह्णाति" इत्येवमादि। तत्र संशयः किमवद्यतिगृह्णातिचोदितानां कर्मणामिमावालभतियजती समुदायस्यानुवदितारौ ? अथापूर्वयोः कर्मणोर्विधातारौ ? इति। इदानीं पूर्वाधिकरणवैषम्यात्पुनः प्रत्यवतिष्ठते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—भवतूद्ध्रादिसंयुक्तदध्यादि-संयुक्तवाक्यानां प्रकृते कर्मणि गुणविधायकत्वेनैवोपपत्तेः कर्मा-नुवादकत्वम्। इह तु "हृदयस्याग्रेऽवद्यति" इत्यादिवाक्येषु हृदयादिसम्बन्धेनावदानं श्रूयते। तत्र हृदयादीनां वाक्यान्तर-विहितत्वेन संस्कारावदानरूपगुणविधानासम्भवात् हृदयादिसा-धनकर्मोत्पादकत्वमेव युक्तम्। "ऐन्द्रवायवं गृह्णाति" इत्यादि-वाक्येषु रससम्बन्धेन ग्रहणं श्रूयते। तत्र रसस्य वाक्यान्तरा-

विहितत्वेन तत्संस्कारग्रहणरूपगुणविधानासम्भवाद्रससाधनक-कर्मोत्पादकत्वम्। एवञ्च सति "यो दीक्षितो यदग्नीषोमीयं पशुमालभते" इत्यत्राग्नीषोमदेवताविधानाय पशुशब्देन लक्षणया हृदयादिसमुदायानुवादः। द्रव्यदेवतासम्बन्धानुमितेन यजिना आलम्भवाक्ये हृदयादिसाधनकयागानुवादः। तथा "सोमेन यजेत" इत्यत्रापि हविःप्रकृतिसोमलताविधानाय यजिना ऐन्द्रवायवादिवाक्येषु द्रव्यदेवतासम्बन्धानुमितयागसमुदायानुवाद इति। अत्रापि पौर्णमासीवत्समुदायानुवादत्वमेव।

ननु हृदयस्याग्रेऽवद्यति इत्यादिवाक्येषु न तावद्यजिः श्रूयते। नाप्यनुमीयते, द्रव्यदेवतासम्बन्धानवगमात्। हृदयादिसम्बन्धवशादवदानस्य वत्सालम्भवद्यागमन्तरेणापि सम्भवाच्च यागानुमापकत्वम्। कथम्? पशुद्रव्याग्नीषोमदेवताकयागविधानेनैव मुख्यपशुशब्दार्थोपपत्तौ दीक्षितवाक्ये लक्षणया पशुशब्देन हृदयाद्यनुवादः। अतः पशौ तावत्सर्वथा पूर्वपक्षो न सम्भवति।

तथा "सोमेन यजते" इति प्रत्यक्षयागविधौ सति कथमैन्द्रवायवादिवाक्येषु द्रव्यदेवतासम्बन्धानुमितस्य यागस्य विधानम्? 'प्रत्यक्षविधिसद्भावात् लभ्यते नानुमानिकम्' इति न्यायविरोधात्। ऐन्द्रवायवादिवाक्यानां चेन्द्रवायुदेवताकश्रौतग्रहणविधानेनैवोपपन्नत्वात् नाश्रुतयागविधानाशङ्कोपपद्यते। भवतु वा

द्रव्यदेवतासम्बन्धेनैन्द्रवायवादिवाक्येषु यागविधानम्, तथापि "सोमेन यजेत" इत्यत्र सोमद्रव्यकयागविधानोपपत्तेः कथं यजतेर्यच्छब्दाद्युपरागाभावेऽपि यागानुवादकत्वं सम्भवति? अतः कथं सोमेऽपि पूर्वपक्षः? इति। उच्यते—पशौ तावद्यद्यपि हृदयादि-सम्बन्धेनावदानं श्रूयते, तथापि "सान्नाय्यं वा तत्प्रभवत्वात्" (जै. सू, ८. १. ४०) इत्यनेनैव न्यायेनायमवद्यतिः सान्नाय्या-वद्यतिप्रकृतिः। सान्नाय्यावद्यतेश्च यागीयद्रव्यसंस्काररूपत्वा-देतस्यापि यागीयद्रव्यसंस्कारकत्वम्। तच्च तदैव सम्भवति, यदि हृदयादीनि यागसाधनानि भवन्ति। तेन यथायागसाधनसं-स्काराभिषवसम्बन्धेन पूतीकानां यागसाधनत्वं कल्प्यते, यथा वा लक्षणसम्बन्धेन फलचमसस्याश्रूयमाणमपि यागसाधनत्वं कल्प्यते, तथेहापीति, पशुशब्देन हृदयादीन्यनूद्यन्ते। यजिना च तत्सम्ब-न्धिना यागाननूद्य अग्नीषोमौ देवतात्वेन विधीयेते। न च पशु-शब्दस्य हृदयाद्यनुवादत्वे लक्षणात्र दोषः। यतो विधौ हि लक्षणा दोषमावहति, नानुवादे। अथवा यो दीक्षितवाक्ये देवता-विधिदर्शनादेव हृदयादिवाक्येषु यागानुमानम्।

ननु यो दीक्षितवाक्ये देवताविशिष्टयागविधिरेवास्तु कथं देवतामात्रविधानम्? मैवम्; एवं हि मन्यते—अवश्यं सिद्धान्ति-नापि हृदयादिगतावदानसंस्कारवैयर्थ्यात् पशुशब्दस्य लक्षणया

हृदयादिपरत्वं वक्तव्यम् । तद्यदि योदीक्षितवाक्ये यागोत्पत्तिः, तदा विधौ लक्षणा, सा चायुक्ता 'न विधौ परः शब्दार्थः' इति न्यायात् । अवद्याति वाक्यानान्तु यागोत्पादकत्वेऽनुवादे लक्षणा, सा न दोषाय । दृष्टा च भाविनीमप्यङ्गप्राप्तिमालोच्योत्पत्तिव्यवस्था । यथा संख्याधिकरणे भाविनीमातिदेशिकावदानगणप्राप्तिमालोच्य सप्तदशयागोत्पत्तिः । तेन पशुशब्देन हृदयादीन्यनूद्य यजतिना तत्सम्बन्धिना यागाननूद्याग्नीषोमौ देवतात्वेन विधीयेते इति सिद्धम् ।

तथा सोमेऽप्यैन्द्रवायवादिवाक्येषु द्रव्यदेवतासम्बन्धेन तावदवश्यं यागोऽनुमातव्यः । न हि द्रव्यदेवतासम्बन्धप्रतिपादकस्य यागं विना स्वार्थे पर्यवसानमस्ति । तदुक्तम्—

यथाग्नेयादिवाक्यानां न प्राग्यागानुमानतः ।
स्वार्थपर्यवसायित्वं तथा सोमेऽपि दृश्यताम् ॥ इति ।

( तं. वा., पृ. ५१० )

नन्वेवं श्रुतानुमितैकदेशमेवेदं वाक्यं निष्पन्नम्—इन्द्रवायुदैवत्येन द्रव्येण यजेतेति । तथा सति सोमवाक्यविहितयागानुवादेनाग्नीषोमवाक्य इव हृदयाद्यनुवादेन देवताविधानमेवास्तु, किमत्र विशिष्टविधिस्वीकारेण ? नैवम् ; सोमवाक्योत्पन्नयागानुवादेनैन्द्रवायवादिवाक्यैर्देवताविधौ एकयागसम्बन्धेन खदिरपलाशानामिवैकस्मिन्यागे विकल्पः स्यात् ।

तदुक्तम्—

तथैकबन्धनार्थत्वात्पलाशखदिरादयः ।
तत्सम्बन्धे विकल्प्यन्ते यागेऽस्मिन्देवतास्तथा ॥ इति ।

(तं. वा., पृ. ५१२)

तथा सति "आश्विनो दशमो गृह्यते तृतीयो हूयते" इति क्रमदर्शनम्, तथा "दशैतानध्वर्युः प्रातस्सवने ग्रहान् गृह्णाति" इति समुच्चयदर्शनञ्च नोपपद्यते । ऐन्द्रवायवादिवाक्यानान्तु यागोत्पादकत्वे भिन्नयागसम्बन्धित्वाद्देवतानां समुच्चये सति क्रमसमुच्चयदर्शनमुपपद्यते । तथा सति रूपाभावेन यागविधानाभावाद्यच्छब्दाद्यभावेऽप्यैन्द्रवायवादिवाक्यविहितयागसमुदायानुवाद एवायं "सोमेन यजेत" इत्यत्र यजतिशब्दः । सोमशब्द ऐन्द्रवायवादिवाक्यावगतरसप्रकृतिसोमलताविधानार्थ इति । एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यद्यत्र पौर्णमासीवद्वाक्यान्तरोत्पन्नयागप्रत्यभिज्ञानं भवेत् । सर्वत्र खलु प्रत्यभिज्ञानबलेनानुवादो भवति । पुनरनुवादसिध्यर्थं प्रत्यभिज्ञाकारणं कल्प्यते । न चावघातिगृह्णातिवाक्येषु यागः श्रूयते, येनात्र प्रत्यभिज्ञानम् ।

तदुक्तम्—

प्रकृतप्रत्यभिज्ञानं वाक्ये यत्रोपलभ्यते ।
तत्र स्यादनुवादत्वं नचात्रैवं प्रतीयते ॥ इति ।

(तं. वा., पृ. ५१२)

तेन योदीक्षितवाक्य एव द्रव्यदेवतासम्बन्धानुमितस्य यागस्य विधानम् । सोमवाक्ये तु प्रत्यक्षसिद्धमेव द्रव्यविशिष्ट-यागविधानम् । न त्र वाच्यम्—पशुद्रव्यकसोमद्रव्यकयागोत्पत्तौ हृदयादीनां रसस्य चाविनियुक्तत्वात्तत्सम्बन्धिनोरवदानग्रहण-रूपसंस्कारयोर्विधानमनर्थकमेव स्यादिति । न हि पशुसोममात्र-प्रतीतिः, यतोऽवद्यतिगृह्णातिवाक्यदर्शनेन तयोरविकृतयोर्देवतोद्देशेन यागविधानात् । किं तर्हि ? हृदयादिपर्यन्तो रसपर्यन्तश्च तेन सोमविनियोगेन तदन्तर्गतपशुहृदयसोमरसयोरपि विनियुक्तत्वाद्वि-नियुक्तगोचरमेव संस्कारविधानम् । यथा—व्रीहिशास्त्रस्य तण्डु-लादिपर्यन्तत्वात् "तण्डुलान् पिनष्टि" इत्यादिसंस्कारविधानम् । न चैवं सति विधौ पशुसोमशब्दः संस्कारज्ञापनार्थः । तदुक्तम्—

द्रव्येणात्यन्तभिन्नेन सह चिन्त्यं बलाबलम् ।
हृदयादिरसद्वारमङ्गत्वं पशुसोमयोः ॥ इति ।

(तं. वा., पृ. ५१६)

किञ्च विशेषतः पशूदाहरणे अवद्यतौ यागः सम्भावयितु-

मपि न शक्यते। यदपि हृदयाद्यवदानस्य सान्नाय्यावदानप्रकृतित्वेन तद्धर्मलाभे सति यागीयद्रव्यसंस्कारत्वाद्यागानुमानमित्युक्तम्, तदप्ययुक्तम्; सान्नाय्यावद्यतेरेव प्रकृतावचोदितत्वेन धर्मसम्बन्धाभावात्। न च "द्विर्हविषोऽवद्यति" इत्यनेन तावदवदानं विधीयते। किन्तर्हि? अर्थप्राप्तानुवादेन द्वित्वमात्रम्। एतच्च सर्वप्रदानाधिकरणे (पू. मी., ३. ४. १८) विस्तरेण वक्ष्यामः। भवतु वा हृदयाद्यवदानस्य तत्प्रकृतित्वं, तथापि न यागसाधनसंस्कारकत्वं तस्य। इतिकर्त्तव्यता चातिदिश्यते, न धर्ममात्रम्। अतो न तद्वशेनापि यागकल्पना। पूतीकाभिषवफलचमसभक्षणयोस्तु यागसाधनद्रव्यसंस्कारयोरेव प्रकृतयोर्वाक्यप्रकरणाभ्यां पूतीकफलचमससम्बन्धेनोपादानमिति वैषम्यम्। यदपि. योदीक्षितवाक्ये पशुशब्दस्य लक्षणया हृदयादिपरत्वमापाद्य विधौ लक्षणाभावात् भाविदेवतासम्बन्धनिरीक्षणेनावद्यतिवाक्य एव यागानुमानमित्युक्तम्, तदपि यागविधौ पशुशब्दस्य हृदयादिपर्यन्तत्वेन मुख्यार्थस्योक्तत्वान्निरस्तम्। पशूदाहरणं तावन्निरपवादम्।

एवं "सोमेन यजेत" इति प्रत्यक्षे यजावैन्द्रवायवादिवाक्येषु यागः सम्भावयितुमेव न शक्यते। न चाग्नेयादिवाक्यानामिवैन्द्रवायवादिवाक्येष्वपि न यागमन्तरेण स्वार्थपर्यवसानमस्तीति वाच्यम्।

यत इन्द्रवायुदेवतोद्देशेन द्रव्यग्रहणविधानेनैव वाक्यपर्यवसानात् । आग्नेयादिवाक्येषु तु पुंव्यापारस्य विधिविषयत्वाद्भवत्यर्थस्य चापुंव्यापारत्वादवश्यं कल्पनीये पुंव्यापारे द्रव्यदेवतासम्बन्धेन याग एव कल्प्यत इत्युक्तम् । इह ग्रहणरूपस्य पुंव्यापारस्य श्रुतत्वान्नापर्यवसानं वाक्यस्येति ।

ननु त्यज्यमानं हविः प्रत्युद्देश्यत्वं देवतात्वम्, न किञ्चिज्जात्या समस्ति । अतः कथं ग्रहणे देवतान्वय ? इति । उच्यते—न हीदं ग्रहणमर्थान्तरभूतम्, किन्तर्हि ? यागावयवभूतमेवैतत् । न हि देवतोद्देशेन त्यज्यते । न चान्योद्देशेन गृहीतस्यान्योद्देशेन त्यागे यागस्सम्पद्यते । तेन देवतोद्देशेन गृहीतस्यैव हविषस्त्यागो याग इति न यागावयवभूते ग्रहणे देवतोद्देशो विरुध्यत इति । एवञ्च यागापेक्षायां "सोमेन यजेत" इत्ययमेव प्रत्यक्षश्रुतो यागोऽस्तीति नात्र यागकल्पनाप्रयास इति । तथा च सति इयमेव यागैकदेशभूतग्रहणसम्बन्धिनी देवता प्रकृतयागे देवतापेक्षिणि सम्बध्यत इति ।

न चैवं सति खादिरपालाशादीनामिवैकबन्धनार्थत्वे देवतानामप्येकयागार्थत्वे विकल्प इति वाच्यम् । यतो नात्र खादिरपालाशादीनामिव बन्धने, देवतानां यागे वाक्येन विधानम्, येन विकल्प आपद्येत । किन्तर्हि ? ग्रहणमुखेन देवतानां यागान्वयः । ग्रह-

ग्रहाणि तावद्भिन्नकार्याणि युगपदेव प्रकरणिना गृहीतानि भिन्न-कार्यत्वात्समुच्चेतव्यानि। तेन ग्रहणद्वारा देवतानामपि समुच्चयो युक्तः। परमयं विशेषः—ग्रहणत्यागयोरेका देवता, येन यदुद्देशेन गृहीतं तदुद्देशेनैव त्यक्तव्यम्। तेन प्रतिग्रहणं सोमयागस्याभ्यासः। एवञ्च सति त्रिषवणादशग्रहदशचमसादीनां प्रत्यभ्यासं भिन्नो यागः "सोमेन यजेत" इत्यनेन शास्त्रेण सकृदुत्पादित इति मन्तव्यम्। तथा सति "आश्विनो दशमो गृह्यते तृतीयो हूयत" इति क्रम-दर्शनम्, तथा "दशैतानध्वर्युः प्रातस्सवने ग्रहान् गृह्णाति" इति समुच्चयदर्शनमुपपन्नं भवतीति सोमोदाहरणमप्यनवद्यम्।

प्रयोजनम्—पूर्वपक्षे हृदयादीनामैन्द्रवायवादियागानां पृथक्त्वा-त्स्वार्थत्वाद्विशेषचोदनालिङ्गात्तद्धर्मातिदेशे सति न सकलधर्मप्राप्तिः। सिद्धान्ते तु पशुयागस्य सोमयागस्यैकत्वात् विकृतौ सकलधर्मा-पत्तिरिति।

सूत्रन्तु—पशुसोमद्रव्यसंयोगात्पशुवाक्ये सोमवाक्ये च याग-चोदना यागविधानम्, यस्मात्प्रकृतयागेष्वनर्थको निष्प्रयोजनो द्रव्यसंयोगः। 'न हि तस्य गुणार्थेन' इति सूत्रावयवो भाष्य-कारेण सोमोदाहरणे सोमलतायाः प्रदेयत्वेन गुणार्थत्वमाशंक्य श्रौतरसावरोधेन तन्निराकरणपरतया व्याख्यातः। 'न हि तस्य गुणार्थेन' इति सूत्रावयवतात्पर्यमनाकलितं भाष्यकारेण। न हि

गुणाधिकरणविरुद्धा प्रदेयत्वेन गुणत्वाशङ्का जैमिनेर्मनसि सम्भाव्यते। व्रीहियववत्प्रदेयप्रकृतित्वेनैव तु सोचिता। तदुक्तम्—

यथैवाष्टाकपालादौ श्रौतेऽपि सति वाक्यतः।
व्रीह्यादयो विधीयन्ते तथा सोमो विधास्यते॥ इति।

(तं. वा., पृ. ५१३)

अत्रैके समाधानमभिदधति—"आग्नेयोऽष्टाकपालो भवति" इत्यत्राग्निदेवतासम्बन्धपुरोडाशप्रतिपादकवाक्यशेषः सम्भवति। "पुरोडाशं कूर्मं भूतं सर्पन्तमपश्यन् तमब्रुवन् इन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्व" इत्यादि। अस्य च स्तुतिपरत्वेऽपि स्तुत्यपुरोडाशप्रतिपादनावरोधात्स्ववाक्यस्थपुरोडाश एवाग्नेयतद्धितपर्यवसानम्। तथा सति किंप्रकृतिकः पुरोडाश इति प्रकृतिद्रव्यापेक्षायां "व्रीहिभिर्यजेत" इति युक्तः प्रकृतितया व्रीहीणां विधिः। अत्र तु "ऐन्द्रवायवं गृह्णाति" इति वाक्यशेषानवगमात्प्रकरणनिरीक्षणेन च "सोमं पुनाति" इति सप्रकृतिकस्यैव रसस्य प्रतीतेस्तत्रैव तद्धितपर्यवसानमिति प्रकृतिरूपापेक्षाभावान्न प्रकृतित्वेन "सोमेन यजेत" इति सोमलताविधिः सम्भवति। न च "त्वाष्ट्रं पात्नीवतमालभेत" इत्यत्र यथालम्भस्यार्थाक्षिप्तालभ्यमात्रे तद्धितपर्यवसानम्, तथा "ऐन्द्रवायवं गृह्णाति" इत्यत्रापि स्ववाक्य एव ग्रहणाक्षिप्तग्रहमात्रे तद्धितपर्यवसानम्।

अव्यवहितश्रुतेश्च "अरुण्या धारया गृह्णाति" इति वाक्ये गौणशब्दस्यैवाव्यभिचारिग्रहणविशेषाभिधायकत्वात्, अव्यभिचरितोपस्थितद्रवद्रव्येणैव तद्धितपर्यवसानमिति वक्तव्यम्। (१) येनान्यपरशब्दोपनीतावप्राप्तेनार्थाक्षिप्तेनार्थेनाभिधानमिति व्युत्पत्तेः, परमते च नित्यं शाब्दाशाब्दयोरसम्बन्धादर्थाक्षिप्तस्यापि तद्वाचकशब्दकल्पनाव्यतिरेकेणान्वयात्मकरणे च "सोमं पुनाति" इति अनन्यपरशब्दोपनीतस्य सोमरसस्यैव प्राप्तेस्तत्रैव पर्यवसानम्।

न च लतावचनत्वात्सोमशब्दस्य "सोमं पुनाति" इत्यत्र सोमशब्दो न रसपर इति वाच्यम्। द्रवद्रव्य·······पहरणाभिधायकस्योत्पुनातिशब्दस्य लतासमभिव्याहारानुपपत्तौ लाक्षणिकस्वप्रभवरसपरत्वस्यावश्याभ्युपेयत्वात्। न च प्रथमावगतसोमशब्दानुरोधेनोत्पुनातिशब्द एव लक्षणाश्रयणान्न सोमलक्षणार्थत्वं वक्तव्यम्। उत्पुनातिशब्दगतलक्षणायां सोमलतासम्बन्धोचितक्रियाविशेषे विनिगमनाप्रमाणाभावात्। सोमशब्दे तूत्पवनसम्बन्धोचितस्वप्रभवरसस्यैव योग्यत्वादस्ति विनिगमनायां प्रमाणमिति तद्गतैव लक्षणेति। एवं सत्युत्पवनप्रधानकर्मत्वे चोभयथापि सोमशब्दस्य रसपरत्वात्किमैन्द्रवायवमित्यपेक्षायामनुषङ्गात्सोमरस एव सम्बध्यते। न च धारावाक्यव्यवधानान्नानुषङ्गः, तत्रापि किं धारया गृह्णातीत्य-

पेक्षायां सोमरससम्बन्धात्। यथा "या ते अग्ने रजाशया" इत्यनेन सम्बद्धं "तनूः" इति पदं हराशयेत्यत्र न व्यवधीयते, तथेहापि सोमरसस्य न धारावाक्येनैन्द्रवायवसम्बन्धो व्यवधीयत इति। तथाच सति सोमरस एव तद्धितश्रुतेः पर्यवसानात्प्रकृतिद्रव्यापेक्षाभावाच्च तत्प्रकृतितया लताविधिस्सम्भवति। तदुक्तम्—'पुरोडाशो ह्यनिरूपितप्रकृतिद्रव्यतयाग्नेयादिषु प्रतीयत इति युक्तं प्रकृतिद्रव्यविधानम्। इह तु निरूपितप्रकृतिकः सोमरस एव गम्यते, न हि भवति सोमरसः किंप्रकृतिक इत्यपेक्षा' इति।

अत्रोच्यते—भवतु सोमरस एव तद्धितश्रुतिपर्यवसानम्, तथापि नियमेन क्रयणाभिषवसंस्कृतसोमप्रभवरसहविष्कयागसिद्ध्यर्थमङ्गतया सोमविधानमर्थवद्भविष्यति। इतरथा त्वनङ्गस्य नियमेनोपादानाभावात् प्रतिग्रहं क्रयणादिस्वरसेनापि यागः क्रियेत। न चानङ्गत्वेऽपि प्रसङ्गादेव क्रीतादभिषुतात्पूतात्तथाभिप्लावितादपि सोमादुद्भूत एवासौ रस ऐन्द्रवायव इति वक्तव्यम्, विकल्पासहत्वात्। किं क्रयणादीनां संस्कारकर्मत्वमाश्रित्योच्यते ? प्रधानकर्मत्वं वा ? न तावदाद्यः कल्पः—तस्य विनियुक्तगोचरत्वेनासम्भवात्। नापि द्वितीयः—तत्रापि (?) यद्यप्सु पानं प्रसङ्गः, तदा क्रीतसोमापचारेऽभिषवादीनां रसापचारे च प्रधानस्य लोप एवेति।

किञ्च—सामान्यशास्त्रं हि प्रसङ्गेन विशेषशास्त्रमपेक्षावशादुपजीवति। यथा पदकर्मशास्त्रं क्रयार्थानीयमानैकहान्युपपदविशेषशास्त्रम्। क्रयाभिषवादिशास्त्राणान्तु लोकसिद्धसोमग्राहित्वेन तुल्यत्वात् 'तुल्येषु नाधिकारः स्यात्' इति न्यायेन न प्रसङ्गविषयत्वमिति युक्तः प्रकृतित्वेन सोमविधिरिति। तदुक्तम्—'सोमेन यजेतेत्येतद्विधिमन्तरेणापि क्रयणाभिषवादिसंस्कारविध्युपपत्तेः'। न चाविनियुक्तत्वेन सोमस्यानङ्गत्वादसंस्कार्यत्वम्। "सोमं पुनाति" इत्यत्र सप्रकृतिकस्यैवावगतस्यैन्द्रवायवादिवाक्येषु विनियुक्तत्वात् सविशेषणान्वयस्य कार्योपयोगित्वेन तत्सम्भवे सति प्रतीतिमात्रोपयुक्तस्योपलक्षणस्यान्याय्यत्वात्। विशिष्टविधौ च विशेषणानामौपादानिकाङ्गभावस्य सर्वत्र स्थितत्वात्। न चौपादानिकस्य सोमाङ्गभावस्य कल्पनीयत्वात्प्रत्यक्षायाश्च श्रुतौ कल्पनानवकाशात्, "सोमेन यजेत" इति प्रत्यक्षश्रुतेरेवाङ्गभावप्रतिपादकत्वमिति वक्तव्यम्। यतोऽभियक्ते यागे तदनुवादेन सोमविधिर्वक्तव्यः। यागाभिव्यक्तिश्च ऐन्द्रवायवतद्धितस्योत्पवनवाक्यावगतसोमविशिष्टरससम्बन्धपूर्विका, तत्र विशिष्टविशेषणविशेष्ययोरैकरूप्यम्, किन्त्वाकांक्षयोग्यतावशाद्देवता रसस्याङ्गभावो न सोमाङ्गभावमन्तरेण सम्भवतीत्यौपादानिके सोमाङ्गभावे पृथगसिद्धे तदुपजीवी सोमविधिः प्रत्यक्षोऽप्यकिञ्चित्कर एवेति। न चैवं सति लताया

अपि प्रदेयत्वप्रसङ्गः । न हि सर्वत्र विशिष्टविधौ विशेषणविशेष्ययोरैकरूप्यम्, किन्त्वाकाङ्क्षायोग्यतावशाद्देवतात्वेनोद्देश्यत्वमेव । तत्रापि रसस्य प्रदेयत्वेऽपि तत्प्रकृतित्वेनैव सोमलतासम्बन्ध इति । अथवा सोमस्याविनियुक्तत्वेऽप्यङ्गभूतरसोपकारकतया अभिषवादिसंस्कार्यत्वं, वत्सस्येव विनियुक्तदोहोपकारकतया "वत्समालभेत" इत्यत्रालम्भसंस्कार्यत्वम्, ऋचां वा यथा विनियुक्तस्तुत्युपकारितया सामसंस्कार्यत्वं, स्वाध्यायस्य वा परमते विनियुक्ततदर्थोपकारकतयाऽध्ययनसंस्कार्यत्वम् ।

ननु सोमस्याविनियुक्तत्वेनानङ्गत्वादनङ्गस्य चाप्रतिनिधेयत्वात्, "यदि सोमं न विन्देयुः पूतीकानभिषुणुयुः" इत्यत्र पूतीकानामभावविधित्वं भवेत्, न सोमप्रतिनिधिनियमः । तथासति पूतीकापचारे तत्सदृशोपादानं भवेत् न सोमसदृशोपादानम् । अतो युक्तः सोमसदृशोपादानार्थमयं सोमविधिरिति वैषम्यम् । न; सोमरसस्य विनियुक्तत्वेन तत्सदृशपूतीकान्तर्गतरसनियमात्प्रतिनिधिनियम एव । अथवा अनङ्गत्वेऽपि सोमस्य तत्प्रकृतिकरसस्यैव विहितत्वेन रसस्येव रसप्रकृतेरपि सोमस्य शास्त्रार्थत्वात् । शास्त्रार्थस्यैव प्रतिनिध्युपयोगित्वात् । सोमप्रतिनिधिनियमोऽपि युक्त एव, किमङ्गता करिष्यति ? न च गुणाधिकरणन्यायेन प्रदेयत्वमप्याशङ्कनीयम् । तत्र हि "वैश्वदेव्यामिक्षा" इति स्ववाक्यगतामिक्षा-

वरोधान्न पुनः "ऐन्द्रवायवं गृह्णाति" इत्यादिषूत्पत्तिवाक्येषु रसस्याप्रतीतत्वेन वैषम्यात् । अतो युक्ता भाष्यकारस्य लतायाः प्रदेयत्वाशङ्केति ।

अत्रोच्यते—यत्तावदुक्तम्—उत्पवनवाक्ये सोमरसस्यैव शाब्दत्वात्तद्धितश्रुतिपर्यवसानम्, तथाच सति न प्रकृतितया सोमविधानं सम्भवतीति । तदयुक्तम्; न तावदुत्पवनवाक्ये सोमरसः श्रूयते । नाप्युत्पवनसमभिव्याहारानुपपत्त्या सोमशब्देन लक्ष्यते । संस्कारकर्मत्वे ह्युत्पवनस्य लतायामुत्पवनरूपसंस्कारासम्भवाद्रसो लक्षणीयः । तथा विनियुक्तत्वेन सोमलतारसयोर्द्वयोरपि संस्कार्यत्वं सम्भवति । संस्कार्यत्वेन च विनियोगकल्पनायामितरेतराश्रयप्रसङ्गात् । तेन भूतभव्यसमुच्चारणन्यायेन प्रधानकर्मत्वमेव स्यात् । तथाच सति मुख्यार्थस्यैव सोमस्य द्रवद्रव्य (?) कल्पापहरणरूपोत्पवनसाधनत्वसम्भवः । नासौ लक्षणा......., न च द्रवद्रव्यान्तरस्य कल्पनीयत्वात् सोमशब्दस्यैव लक्षणया रसोपस्थापकत्वमिति वक्तव्यम् । पक्षद्वयेऽपि कल्पनासमानत्वात् । उत्पवनसाधनत्वेन रसलक्षणायामपि पार्थिवं द्रव्यान्तरं कल्पनीयमेव । इयांस्तु विशेषः—एकत्रोत्पवनाविनाभूतद्रव्यस्वीकारेण मुख्यसोमशब्दार्थस्योत्पवनसाधनत्वम्, अपरत्र चोत्पवनाविनाभूतसाधनस्वीकारेण सोमशब्दे लाक्षणिकत्वम् । तच्चायुक्तम् ।

अथवास्तु उत्पवनवाक्ये शाब्दी रसावगतिः, न तत्र तद्धितपर्यवसानम् । न च तथासति सोमलतायामेव तद्धितपर्यवसानमिति वक्तव्यम् । धारावाक्यस्य व्यवधानेनासम्बद्धत्वात् । धारावाक्ये पुनर्ग्रहणस्य गुणकर्मत्वे प्रधानकर्मत्वेऽपि वा धारार्हद्रवद्रव्यस्याक्षेपलभ्यत्वेन तस्यैव गृह्णातिचोदनासाम्यात् । आनन्तर्याच्च बुद्धितारतम्याच्छब्दकल्पनयापि तत्रैव तद्धितवृत्तिः । तेनायमर्थो भवति—ऐन्द्रवायवं द्रवद्रव्यं गृह्णीयादिति । द्रवद्रव्यश्च द्विविधं भवति—निर्यासमनिर्यासश्च । तत्र भवत्याकाङ्क्षा किं द्रवद्रव्यं निर्यासरूपं कुतश्चित्प्रकृतिविशेषादुपादेयम् ? अनिर्यासं वा कुतश्चित्तटाकादिजलाशयादुपादेयम् ? इत्यपेक्षायां "व्रीहिभिर्यजेत" इतिवत् "सोमेन यजेत" इति प्रकृतितया सोमविधिरुपपन्न एवेति व्रीहिमुद्रार्थः ? । भवतु वा यथाकथञ्चित् उत्पवनवाक्यगतसोमप्रकृतिरस एव तद्धितपर्यवसानम्, तथाप्यविनियुक्तस्यानङ्गभूतस्य संस्काराभावात् क्रयणाभिषवादिसंस्कारसिद्धये सोमविधिरर्थवान् भविष्यति ।

न च विशिष्टविधानेन सोमोऽपि विनियुक्त एवेति वक्तव्यम् । यतः शाब्दत्वलोभेन सन्निहितधारावाक्याक्षिप्तद्रवद्रव्यपरित्यागेनोत्पवनवाक्यलक्षितसोमरसेन तद्धितपर्यवसाने युक्तम्, तत्किं रसस्येव सोमस्यापि लक्षणया शाब्दत्वम् ? श्रुतिवृत्त्या वा ? न तावल्लक्ष-

णया ; उत्पवनक्रियासम्बन्धानुपपत्तिभ्यां हि लक्षणावृत्त्या सोमशब्दः सम्बन्धायोग्यमेव ह्यात्मानं लक्षयतीति हास्यास्पदमेव। नापि श्रुतिवृत्त्या ; एकस्य शब्दस्य सम्भवासम्भवकृतयुगपच्छ्रुतिलक्षणाविरोधात्। तेन विशिष्टत्वासम्भवाद्यथा 'गङ्गायां घोषः प्रतिवसति' इत्यत्र गङ्गापदार्थलक्षिततीरमात्रस्यैव निवासयोग्यस्य लक्षणाविषयत्वम्, न त्वयोग्यस्यापि जलस्य, तथात्रापि सोमभक्त्युपलक्षितरसस्यैव लक्षणाविषयत्वमिति अशाब्दत्वाल्लताया न विशेषणत्वेन रसान्तर्भावो घटत इति क्रयणादिसंस्कारसिद्धये युक्तः "सोमेन यजेत" इति प्रकृतिविधिरिति।

अथाविनियुक्तस्यानङ्गस्याप्यङ्गभूतरसोपकारकतया वत्सादिवत्संस्कारार्हत्वात्तत्सिध्यर्थमनर्थकः सोमविधिरित्युच्यते। तदयुक्तम् ; उपकारकस्य हि संस्कारो भवन्नव्यभिचरितोपादानस्यैव भवति, नित्यवच्छ्रुतानां संस्काराणामनित्यसंयोगविरोधात्। तेन विनियुक्तापूर्वीयदोहस्य प्रस्नवनोपायान्तरनिषेधेन वत्सोपादानस्याव्यभिचारात् "साम्ना स्तुवीत" इति स्तुतिविनियुक्तानाञ्च साम्नां "ऋच्यध्यूढं साम गायति" इति ऋगधिष्ठानाव्यभिचाराद्वत्सस्य च ऋचाञ्च संस्कारो युक्त एव। स्वाध्यायस्य तु न विनियुक्तार्थोपकारकतयाध्ययनसंस्कार्यत्वम्, किन्त्वध्ययनसंस्कृतस्यैव तथाभूतार्थज्ञानहेतुत्वात्। तथा आधानसंस्कृताहवनीयविनियोगवत्

सामर्थ्यात्संस्कृतविनियोग एवायम् । यथा चैतत्तथार्थवादाधिकरण एवोक्तम् । सोमरसस्य त्वविनियुक्तत्वेऽपि प्रकारान्तरेणापि तदुपादानाविरोधेन नियमेन तदुपादानासम्भवात्संस्कृतविनियोगस्य चासम्भवाद्भवदनभिमतत्वाच्च न वत्सादिसाम्यम्, नापि स्वाध्यायसाम्यमिति क्रयणाभिषवसंस्कारार्थं युक्तः 'सोमेन यजेत" इति सोमविधिः । न च क्रयणाभिषवादिसंस्कारवाक्यैरेव विनियोगभङ्गिभियाङ्गभावस्सोमस्याक्षिप्यत इति वाच्यम् । प्रत्यक्षे हि सोमविधौ लैङ्गिककल्पनासम्भवात् । तदुक्तम्—'स एवायं युक्तः सोमेन यजेत' इति । न च विनापि विधानात्संस्कारवशादेव सोमाङ्गभावप्राप्तौ किं विधिनेति वाच्यम् । यतः शक्यमितरेणापि वक्तुम्—"सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इति तदधिकाराक्षेपादेवोत्पत्तिप्राप्तौ किं सर्वत्र विधिनेति ।

अथाम्नानसामर्थ्येन श्रुतशब्दावगतोत्पत्तेरेवानुष्ठितस्य कर्मणोऽपूर्वसाधनत्वम्, तर्ह्यत्रापि श्रुतशब्दावगताङ्गभावस्यैव सोमस्यानुष्ठानमपूर्वसाधनमिति नानुपपन्नम् । अतो युक्तः प्रकृतित्वेनैव सोमविधिशङ्का, न तु प्रदेयत्वेन युक्ता, तदधिकरणविरोधात् । वाक्यान्तरोपात्तत्वेऽपि रसस्य एकवाक्योपात्ते सावैश्वदेव्यामिक्षेतिवत् तत्र तद्धितपर्यवसाने प्रदेयरसावरुद्धत्वाविशेषादित्यलमतिविस्तरेणेति । तेन 'नहि तस्य गुणार्थेन' इति सूत्रावयवस्यायमर्थः—पशौ प्राप्ते

कर्मणि द्रव्यदेवतोभयविधानासम्भवान्न पशुद्रव्यस्य गुणार्थं विधानम्, नापि सोमयागानुवादेन प्रकृततया सोमस्य, ऐन्द्रवायवादिवाक्यानां ग्रहणमात्रपर्यवसितत्वमेव यागानुवादासम्भवादिति ॥

इति षष्ठं पशुसोमाधिकरणम् ॥ ६ ॥

अथ सप्तमं संख्याधिकरणम्

पृथक्त्वनिवेशात्संख्यया कर्मभेदस्स्यात् ॥ २.२.२१. ॥

( विषयसंशयसङ्गतयः )

अस्ति वाजपेयः—"वाजपेयेन स्वाराज्यकामो यजेत" इति । तत्र प्राजापत्याः पशवः "सप्तदश प्राजापत्यान् पशूनालभते, सप्तदशो वै प्रजापतिः प्रजापतेराप्त्यै श्यामास्तूपरा एकरूपा भवन्ति, एवमिव हि प्रजापतिस्समृद्ध्यै" (तै. ब्र. १. ३. ४.) इति । तत्र सन्दिह्यते—किं सप्तदशैतानि कर्माणि ? अथवा सप्तदशपशुकमेकमेव कर्म ? इति । सपरिकरमभ्यासप्रमाणं प्रतिपाद्येदानीं संख्यानिबन्धनः कर्मभेदो निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—प्राजापत्यानित्यत्र द्वेधा विग्रहवाक्यं प्रतिभाति । प्राजापत्यश्च प्राजापत्यश्चेति तद्धितान्तानामयमेकशेषः । अथ पशुश्च पशुश्च पशुश्च पशवः, प्रजापतिर्देवतैषां

प्राजापत्या इति कृतैकशेषाणां प्रजापतिदेवतासम्बन्धः। तदुक्तम्—

किन्वयं तद्धितान्तानामेकशेषः कृतो भवेत्।
किंवा कृतैकशेषाणां पश्चात्तद्धितसङ्गतिः॥ इति।

(तं. वा., पृ. ५२३)

तदत्र कृतैकशेषाणामेव तद्धितसङ्गतिरिति युक्तम्। येन हि तद्धितान्तस्यैकशेषः क्रियते। तेन प्राजापतिपशुरूपयोः प्रकृतिप्रत्ययार्थयोर्द्वयोरेव करणीयः, न च तत्र प्रमाणमस्ति। बहुवचनं हि प्रमाणमेकशेषे। तच्च विशेष्यभूतप्रत्ययार्थगतमेव प्रत्यक्षमुपलभ्यते। न तु विशेषणीभूतप्रकृत्यर्थगता। तेन प्रत्ययार्थभूतानां पशूनामेकशेषः प्रतीयत इति सप्तदशानां पशूनामेकप्रजापतिदेवतासम्बन्धात्सप्तदशपशुद्रव्यकमेकं कर्मेति। तदुक्तम्—

प्रत्ययार्थबहुत्वं हि प्रत्यक्षमुपलभ्यते।
तत्कृतश्चैकशेषत्वमिति न प्रकृतौ भवेत्॥ इति।

( तं. वा., पृ. ५२३ )

एवञ्च सति कर्मैकत्वात् कल्पनालाघवं भवति। नन्वेकयागपरत्वेऽतिदेशादेकदैवैकादशावदानगणः प्राप्यते। तस्य च सप्तदशसु पशुषु यद्येकस्यावदानगणस्य सम्बन्धः, तदा षट्सु न स्यात्। अथ मिलितस्य, तदा षोडशसु पशुषु न स्यादिति कथमेककर्म-

त्वम्। नैवम्; एवं हि मन्यते—नायं साक्षाद्यागधर्मः, किन्तु यागसाधनभूतपशुधर्मोऽयं पशुद्वारेण यागोपकारकः। तदत्र यागेनापि स्वसाधनीभूतपशुद्वारेणाकांक्ष्यमाणः प्रतिपशु भेदेनैवावदानगणः सम्बध्यत इति सप्तदशपशुद्रव्यक एक एव याग इति। एवं प्राप्ते—

अभिधीयते—भवेदेवं यदि कृतैकशेषाणां तद्धितसम्बन्धो भवेत्। किन्तर्हि? तद्धितान्तानामेवायमेकशेषः। न च बहुवचनसम्बन्धात्प्रत्ययार्थस्य पशोरेवैकशेषो न प्रकृत्यर्थस्य प्रजापतेः बहुवचनसम्बन्धाभावादिति वाच्यम्। यतो बहुवचनसम्बन्धयोग्यस्य हि तदभावेनैकार्थपरत्वाभावं गमयति। न चोपसर्जनभूतायाः प्रकृतेर्बहुवचनसम्बन्धयोग्यता समस्ति। तेनात्र बहुवचनसम्बन्धाभावस्यानिर्णायकत्वादयमत्र सन्देहः—किं कृत्स्नस्यैव प्राजापत्यशब्दस्यायमेकशेषः? अथ वा प्रत्ययार्थभूतपशुशब्दस्य? इति। तत्र वाक्यशेषगतप्रकृतिशब्दवशादेव निर्णयो भवति। प्रकृतौ ह्येकपशुगतस्यैकादशावदानगणस्यैकयागसाधनत्वमेवावगतम्। तदत्र प्रत्येकं सप्तदशपशुगतस्यैकादशावदानगणस्यैकयागसाधनत्वे सति न सम्भवतीति प्रतिपशु यागभेदोऽवगम्यते। स च तद्धितान्तानामेकशेषपक्षे भवतीति तद्धितान्तानामेकशेष इति निर्णीयते। यथोक्तम्—पशुधर्मोऽयमेकादशावदनगणो न यागधर्मः।

स च यागैकत्वे सत्यतिदेशात्प्रतिपशु सम्भन्त्स्यते। तदयुक्तम्; तत्रैकादशावदानगणशब्दे नैकादशावद्यतिक्रियागणोऽभिप्रेतः। किन्तर्हि? अवदीयत इति व्युत्पत्त्यैकादशावदेयमदेयद्रव्यगणः। न चासौ पशुधर्मः, पशुसंस्कारत्वाभावात्; किन्तु यागसाधनत्वाद्यागधर्मः। अतश्चैकयागत्वे सति एकपशुसम्बद्धैकादशावदेयगणसम्बद्धः, न त्वेकपशुसम्बद्धः। तथा सत्येकपशुगतस्यैकादशावदानगणस्यैकयागसाधनत्वप्रतिपादकातिदेशबाधप्रसङ्गात्। तेन सप्तदशपशूनां यागसाधनत्वसम्पत्तये सप्तदशैवैते यागा इति सिद्धम्।

एतत्तु भाष्यकारेण द्रव्यगतापि संख्या कर्मभेदिकेति प्रतिपादयितुमुक्तम्। कर्मगतसंख्या सकृच्छ्रुतादाख्यातपदादेकभावनाविधानात्कृतार्था न भावनाभेदमापादयतीति भावनाभेदे प्रमाणाभावादेकैव भावना विधीयते। ननु होमभेदादेव भावनाभेदो भविष्यति। होमभेदश्च "तिस्र आहुतीः" इति पृथङ्निवेशित्वसंख्यासम्बन्धादेव प्रतीयते। तत्कथं भावनैकत्वमिति? नैवम्; प्रथमं तावत्स्वपदे एकैव होमभावना प्रतीयते। पश्चात्तु पदान्तरसम्बन्धावगम्यमानः संख्याभेदः प्रथमावगतैकत्वसंख्यावरोधेन "एकादश प्रयाजान्यजति" इतिवदभ्यासेनैवोपपन्नत्वान्न भावनास्वरूपभेदमापादयितुमलमित्येकैव भावनेति। एवं प्राप्ते—

अभिधीयते—भवेदेवं यद्युत्पत्तिगतेयं संख्या न भवेत्। तथाहि—"तिस्र आहुतीर्जुहोति" इत्येतेन वाक्येन त्रित्वविशिष्टो होमो विधीयते। न तु विहिते होमे प्रत्ययात्संख्यावत् वाक्यान्तरेणात्र संख्याविधानम्। यापि जुहोतीतिपादादेकत्वसंख्या प्रतीयते, साऽपि न होमस्य। अपि तर्हि कर्त्तुरिति कर्तृसमानाधिकरणे स्थास्यति। तेनोत्पत्तिशिष्टत्रित्वसम्बन्धास्त्रयो होमाः। तत्र तेषां भेदात्तदनुबन्धास्तिस्रो भावना विधीयन्त इति सिद्धम्।

प्रयोजनम्—पूर्वपक्षे सप्तदशपशूनामेकयागसाधनत्वे असक्तत्वात्साधनाभावस्य पदार्थानुष्ठानसमापने सप्तदशसु पशुषु धर्मानुष्ठानम्। तद्वत्संस्कृत एकस्मिन् पशौ विनष्टे व्यासङ्गिसाधनत्वस्याविनष्टत्वात्पश्वन्तरमुपादाय प्रथमतः पशुधर्मः कर्तव्यः। सिद्धान्ते तु यागभेदे प्रतिपशु साधनताभेदादेकस्मिन् पशौ नष्टे तन्मात्रस्यैव धर्मावृत्तिर्नेतरेषामिति।

सूत्रन्तु—पृथक्त्वेन सह संख्यया एकार्थनिवेशादुत्पत्तिशिष्टया संख्यया कर्मभेदो भवेदित्यर्थः॥

इति सप्तमं संख्याधिकरणम्॥ ७॥

## अथाष्टमं संज्ञाधिकरणम्

## संज्ञा चोत्पत्तिसंयोगात् ॥ २. २. २१. ॥

### ( विषयसंशयसङ्गतयः )

"अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः" इति । अत्र संशयः—किमेभिर्नामधेयैः प्रकृतं सङ्कीर्त्य सहस्रदक्षिणादिर्गुणो विधीयते ? अथ वक्ष्यमाणविशेषाणि कर्मान्तराणि उपदिश्यन्ते ? इदानीं संज्ञागुणप्रकरणैर्भेदे वक्तव्येऽल्पविचारतया संज्ञानिबन्धन एव तावद्भेदोऽभिधीयते ।

### ( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—ज्योतिष्टोमानन्तरमिदम् "अथैष ज्योतिः" इत्यादि श्रूयते । न चात्र धात्वर्थभावनाविध्यभिधायकः कश्चिच्छब्दोऽवगम्यते । यत्तु "एतेन सहस्रदक्षिणेन यजेत" इति विध्याख्यातपदं, तदपि प्रकृतस्य कर्मणो गुणफलविधानेनार्थवदिति न कर्मान्तरमापादयति । ननु "अथैष ज्योतिः" इत्यत्र ज्योतिःसंज्ञाश्रवणादर्थान्तरबुद्धौ जातायाम् "एतेन यजेत" इति यजिसामानाधिकरण्याद्यागरूपमेव तदर्थान्तरमिति तस्यैव सहस्रदक्षिणागुणविशिष्टफलविधानेन कर्मान्तरमेवेति । उच्यते—स्यादेवं यद्येष ज्योतिःशब्दादर्थान्तरबुद्धिर्भवेत् । तथाहि—अथैष

ज्योतिश्शब्दयोस्तावत्प्रकृतविषयत्वं सिद्धमेव । न चैकस्य कर्मणो नानासंज्ञासम्बन्धो न दृष्टः, दर्शपूर्णमासयोरेव दाक्षायणायज्ञ-संक्रमणायज्ञसाकम्प्रस्थाय्यरूपनानासंज्ञासन्दर्शनात् । लोकेऽप्येक-स्यैव हस्तः करः पाणिरित्यादिनानासंज्ञासन्दर्शनात् । विशेषस्तु ज्योतिःशब्दस्य वसन्ते वसन्ते ज्योतिषा यजेतेतिवत् ज्योतिष्टो-मोपस्थापकत्वाज्ज्योतिष्टोमादर्थान्तरस्य न विधानमिति । तेन ज्योतिरादिशब्दोपस्थापितस्य ज्योतिष्टोमस्यैव सहस्रदक्षिणादिगुणकं प्रयोगान्तरं फले विधीयते । अथवा दधिगोदोहनन्यायेन सहस्र-दक्षिणादिगुणस्यैव फले विधानमित्यकर्मान्तरत्वमिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि ज्योतिरादिसंज्ञाश्रवणाज्ज्योतिष्टो-मव्यतिरिक्तार्थान्तरबोधो न भवेत् । तथाहि-सर्वत्रैव तावद् 'अन्यायश्चानेकशब्दत्वम्' इति न्यायेन शब्दान्तरश्रवणादर्थान्तर-बुद्धिरेवोत्सर्गतो भवति । सा च क्वचिद्बलीयस्या प्रत्यभिज्ञया बाध्येतापि । यथा दाक्षायणयज्ञादौ । तत्र चाविच्छिन्न एव दर्शपूर्णमासप्रकरणे यजिः श्रूयमाणः प्रकृतयागविषय एव विज्ञायते । तत्समभिव्याहाराच्च दाक्षायणयज्ञादिसंज्ञान्तरमेवावलम्बत इति युक्तम् । इह तु पूर्वप्रस्तुतज्योतिष्टोमविलक्षणां संज्ञान्तरमुच्चार्यमा-णामेवात्मानुरञ्जितार्थान्तरबोधमेव जनयन्ति । न च ज्योतिरादि-

शब्दानां ज्योतिष्टोमसंज्ञैकदेशत्वेन ज्योतिष्टोमप्रतिपादकत्वमिति वाच्यम् । ज्योतिःशब्देन ज्योतिष्टोमलक्षणायागशब्दलक्षणादोषात् । "वसन्ते वसन्ते ज्योतिषा यजेत" इति ज्योतिष्टोमप्रकरणश्रुतस्यागत्या वृत्त्यन्तराश्रयणं भवतु नाम, न चेह तथा । अव्यापकं चैतत्; "अथैष गौः" इत्येवमादीनामप्युदाहरणत्वात् । तदिह संज्ञान्तरेणार्थान्तरे सिद्धे कोऽसौ संज्ञीत्यन्वेषणे पूर्ववृत्तयागानां ज्योतिष्टोमान्तर्भूतत्वेन ज्योतिष्टोमसंज्ञाविषयत्वान्नैतत्संज्ञाविषयत्वम् । परस्ताद्विधीयमानस्य तु संज्ञान्तरानवरुद्धत्वात् "अथैतेन सहस्रदक्षिणेन यजेत" इत्येतच्छब्देन पूर्वसंज्ञासामानाधिकरण्यावगमात्सैव संज्ञेति निश्चीयते ।

ननूत्पत्तिपरो विधिः शब्दान्तरादिसहायः कर्मभेदको भवति । तदुक्तमाचार्येण 'विधेरुत्पत्तिभेदः ?। नोत्पन्नस्य पुनरुत्पत्तिः सम्भवति' इति । न चाथैष ज्योतिरित्यत्र विधिः श्रूयते । यश्च परस्तात् "अथैतेन सहस्रदक्षिणेन यजेत" इति विधिः सोऽपि गुणफलसम्बन्धव्यापृतत्वात् विनियोगपरो भवितुमर्हति । कथं संज्ञाया भेदकत्वमुच्यते । सत्यम्, विनियोगपरो विधिः, स तु न पूर्वप्रवृत्तस्य ज्योतिष्टोमस्य, तस्य ज्योतिरादिसंज्ञान्तरत्वेनानुपस्थानात्; किन्तर्हि ? ज्योतिःसंज्ञकस्यैव यागान्तरस्यायं विनियोजकः । न चानुत्पन्नयागान्तरस्य विनियोगस्सम्भवतीति ज्योतिरादिसंज्ञैवो-

त्पत्तिविधिं परिकल्प्य कर्म भिनत्तीति संज्ञायाः कर्मभेदकत्वमिति । तदुक्तम्—

संज्ञानदीव्यवच्छिन्नो यजिः पूर्वं न गच्छति ।
न च पूर्वस्तमित्येवं बलादर्थान्तरं गतः ॥ इति ।

(तं. वा., पृ. ५२६)

प्रयोजनम्—पूर्वपक्षे ज्योतिष्टोमस्यैव फलविशेषाय सहस्रदक्षिणेनानुष्ठानम् । सिद्धान्ते तु यागान्तरस्येति ।

सूत्रन्तु—यथोत्पत्तिसंयोगिनी संख्या कर्मभेदिका तथैव संज्ञाप्युत्पत्तिसंयोगिनी भेदिकेत्यर्थः ॥

इत्यष्टमं संज्ञाधिकरणम् ॥ ८ ॥

## अथ नवमं गुणाधिकरणम्

### गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥२. २. २३॥

( विषयसंशयौ )

चातुर्मास्येषु वैश्वदेवे पर्वणि समामनन्ति—"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्" इति । तत्र सन्दिह्यते—किमामिक्षागुणके कर्मणि वाजिनं गुणविधिः ? उत तस्माद्वाजिनगुणकं कर्मान्तरमिति । पूर्वं संज्ञानिबन्धनकर्मभेदं

निरूप्य इदानीं गुणप्रकरणाभ्यां भेदे वक्तव्ये वस्तुत्वाद्गुणनिबन्धन एव कर्मभेदः प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—"वाजिभ्यो वाजिनम्" इत्यवगम्यो वाजिशब्दाभिधेयदेवताया वाजिनसम्बन्धः प्रतीयते । अश्वश्च वाजिशब्दाभिधेयः । न चासौ देवतात्वेन प्रसिद्धः, नाकसदामेव देवतात्वात् । न च "वसन्ताय कपिञ्जलानालभते" इतिवदश्वस्यापि देवतात्वमिति वाच्यम् । यतोऽगत्या रूढया तत्र तथाश्रितम् । इह त्ववयवशक्तिद्वारेण विश्वेदेवा एव वाजिशब्दाभिधेयास्सन्ति । तथाहि—वाजोऽन्नम्, आमिक्षापि चान्नमेव । अनन्तरवाच्ये च तेषामेवामिक्षावत्तया वाजोऽस्यास्तीति व्युत्पन्नवाजिशब्दाभिधेयत्वात् । पूर्व (वाक्यानुमिते) यागे विश्वेदेवदेवताके वाजिनमात्रं विधीयत इति । तदुक्तम् —

अनन्तरोपदिष्टेन वाजेनान्नेन वाजिनः ।
विश्वे देवाः प्रतीयन्ते तच्च कर्मेह वाजिनम् ॥ इति ।

(तं. वा. पृ. ५३२)

न चोत्पत्तिशिष्टामिक्षागुणावरुद्धत्वेन निराकाङ्क्षत्वात् न वाक्यान्तरोपात्तवाजिनगुणसम्बन्ध इति वाच्यम् । उत्पत्तिशिष्टगुणावरोधेऽपि निष्क्रय्यानुवादेन क्रयवद्गुणान्तरोपपत्तेः । ननु "अरुणया

पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" इत्यत्र निष्कृष्टस्यैव क्रयस्य क्रीणातिपदेनाम्नातत्वात् "वाससा क्रीणाति" इत्यादिष्वपि क्रीणातिपदेन निष्कृष्टक्रयानुवादात्तत्र युक्तं वासःप्रभृतीनां विधानम्। इह तु वाक्यद्वयेऽपि यजिपदाभावात्कथं निष्कृष्टयागप्रतिपादकत्वमस्ति। तथा "वाजिभ्यो वाजिनम्" इत्यत्रापि द्रव्यदेवताप्रतिपादककर्मकारकसम्प्रदानकारकयोः सम्बन्धस्य यागक्रियामन्तरेणासम्भवाद्यागकल्पनावसरे वाजिपदस्यामिक्षायागीयविशेषदेवतापरत्वादामिक्षायागेनैव द्रव्यदेवतासम्बन्धोपपत्तौ तत्प्रतिपादकमेव श्रुतार्थापत्त्या वाजिपदं कल्प्यते।

एतावानयं विशेषः—पूर्वस्मिन्वाक्ये अप्रकृतत्वाद्द्रव्यदेवताविशिष्टयाग एव विधीयते। वाजिनवाक्ये तु देवतायाः प्रागस्य तु प्राप्तत्वात्कल्पितयजिपदेन निष्कृष्टयागमनूद्य वाजिनमात्रं विधीयत इति। किन्तु निष्कृष्टानुवादसाम्येऽप्ययमत्र विशेषः—भिन्नातिप्रयोजनत्वात्क्रयेण द्रव्याणां समुच्चय एव, इह तूपकार्यत्वादामिक्षावाजिनयोर्विकल्प एव। न च "वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति" इतिवत्तुल्यकालत्वेऽपि समुच्चय इति वक्तव्यम्। तुल्यकार्याणामप्येकवाक्योपादानेन परस्परसापेक्षाणां विशेषतश्च कारकसमुच्चितानां भवतु समुच्चयः। इह तूक्तन्यायेन वैश्वदेववाक्ये द्रव्यदेवताविशिष्टयागविधानम्, न वाजिनवाक्ये

तदनुवादेन वाजिनमात्रविधानमिति वाक्यभेदे सिद्धे भिन्नवाक्यविहितयोस्तुल्यकार्ययोर्व्रीहियवयोर्विकल्प एवेति । समुच्चयाभिधानन्तु वार्त्तिके प्रौढवादमात्रेणेति मन्तव्यम् ।

ननु देवतासम्बन्धद्वारको हि द्रव्यस्य यागसम्बन्धः । तत्रामिक्षायां तद्धितश्रुत्या देवतासम्बन्धः, वाजिनस्य तु वाक्येन । अतः कथं विषमशिष्टयोर्विकल्प इति । मैवम्; एवं हि मन्यते— स्यादेवं हि यदि वैश्वदेवपदेनामिक्षासम्बन्धः प्रतीयते । किन्तर्हि ? आमिक्षासमभिव्याहारलक्षणाद्वाक्यादेवायम् । वैश्वदेवीपदात् सामान्येन द्रव्यसम्बन्धेऽवगते विशेषमात्रमामिक्षापदात्प्रतीयते, तर्हि वाजिभ्य इत्यत्रापि चतुर्थीतः सामान्येन प्रदेयद्रव्यावगतौ वाजिनपदाद्विशेषावगम इति नास्ति वाक्यगम्यत्वे कश्चिद्विशेष इति । न च 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्' (जै. सू., १०. ४. २३.) इत्यनेन न्यायेन वाजिनानुवानेन वाजिशब्देनैव देवतोपादानमिति वाच्यम् । वाजिशब्दस्यामिक्षायागीयदेवतोपलक्षणत्वात् । आमिक्षायागीयदेवतायाश्च विश्वेदेवशब्दाभिहितत्वात् विश्वेदेवशब्देनैवोपात्तस्य वाजिनान्वय इति । न चैवं देवतान्वयेऽपि "ऐन्द्रं दध्यमावास्यायाम्" इतिवत्कर्मभेद इति वाच्यम् । यतस्तत्र निरपेक्षवाक्यद्वयेनेन्द्रसम्बन्धावगमाद्दधिपयोद्रव्यकयागभेदो युक्तः इह तु वाजिपदेनामिक्षासम्बद्धपूर्वयागीयविश्वेदेवसम्बन्धप्रतिपादनात्कर्माभेद इति । अतः

पूर्ववाक्यविहित एव यागे वाजिनमात्रगुणविधानमिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि श्रौतोत्पत्तिशिष्टामिक्षावरुद्धे कर्मणि वाजिनगुणविधिरुपपत्स्यते । तथाहि—न तावद्वाजिनस्य पूर्वस्मिन् कर्मणि समुच्चयेन विधानं सम्भवति, भिन्नवाक्योपात्तयोस्तुल्यकार्ययोः समुच्चयाभावस्योक्तत्वात् । नापि विकल्पेन, विषमशिष्टत्वेन विकल्पासम्भवात् । श्रौतो हि विश्वेदेवानामामिक्षासम्बन्धः । वाजिनसम्बन्धस्तु वाक्यादुत्पन्नः । नन्वामिक्षासम्बन्धोऽपि वाक्यीय इत्युक्तम् । स्यादेवं यदि विश्वेदेवा देवता अस्येति सर्वनामपदेन द्रव्यमात्रमुन्नीयेत । द्रव्यविशेषविषयत्वात्तद्धितस्य तद्धितश्रुतिगम्य एव विश्वेषां देवानामामिक्षासम्बन्धः । तदुक्तम्—

नैव हि द्रव्यमात्रस्य तद्धितैर्देवतोच्यते ।
अस्य शब्दाभिधेयस्य विशेषस्यैव देवताः ॥
आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः ।
अमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम् ॥ इति ।

( तं. वा., पृ. ५३३., ५३४. )

वाजिभ्य इत्यत्र न प्रातिपदिकेन विभक्त्या वा हविर्द्रव्यमभि-

हितम् । नापि तस्यैव देवतान्वयित्वम्, किन्तु वाजिनपदसमभिव्याहारलभ्यत्वाद्वाक्यगम्यमेवेति । तदुक्तम्—

न प्रातिपदिकेनोक्तं न विभक्त्या हविः स्वतः ।
न चास्य देवतायोग इति वाक्यात्प्रतीयते ॥ इति ।

( तं. वा., पृ. ५३५. )

ननु "वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति" इत्यत्र श्रौतामिक्षासम्बन्धेऽपि वरुणस्य प्रकारान्तरेणापि निष्कासतुषसम्बन्धो दृष्ट एव, तद्वदिहापि वाजिभ्यो वाजिनसम्बन्धो भविष्यतीति । मैवम्; तत्राप्यवश्यं कल्पनीये निष्कासतुषयोर्देवतासम्बन्धे सन्निहितदेवतापरित्यागे कारणाभावादगत्या तथाश्रितम् । अत्र तु कर्मान्तरविधानेनैवोपपत्तेर्वैषम्यमिति । किञ्च—उत्पत्तिशिष्टामिक्षावरुद्धयागस्योत्पन्नशिष्टवाजिनसम्बन्ध एव नास्तीति कथं विकल्पः ? इति ।

इदन्त्विह वक्तव्यम्—कः पुनरुत्पत्तिशिष्टगुणावरोधो नाम विरोधप्रकारः ? तत्रोच्यते—प्रतिपत्तिविरोध एवायम् । आकाङ्क्षानिबन्धनो हि शब्दस्यान्वयः । न चोत्पत्तौ गुणविशिष्टे कर्मण्यवरोधे तत्समानकार्यगुणान्तराकाङ्क्षा समस्तीति नोत्पन्नशिष्टान्वयः । यत्र तु कार्यभेदः, तत्रोत्पत्तिशिष्टेऽपि द्रव्यान्तरे उत्पन्नशिष्टानामपि द्रव्याणां सम्बन्धो भवत्येव । तेनोत्पत्ति-

शिष्टैकहायन्यवरुद्धे क्रये उत्पन्नशिष्टानामपि वासःप्रभृतीनां कार्य-भेदेनाकाङ्क्षासम्भवात्समुच्चयो युक्त एवेति वैषम्यम् । किञ्च वाजिशब्दो हि 'रूढिर्योगमपहरति' इति न्यायेनाश्वमेव प्रतिपादयति, न च विश्वान्देवान् । न च नाकसदामेव देवतात्वम्, किन्तु या यस्य हविष उद्देश्यतया चोद्यते सा तस्य देवतेति शार्दूल-वसन्तादिवदश्वस्यापि देवतात्वमविरुद्धम् । भवतु वा यौगिको वाजिशब्दः, तथापि कथं देवतात्वप्रसङ्गः ? आमिक्षायागे हि तेषां स्वरूपेण देवतात्वम्, वाजिने तु वाजयोगित्वेन । ततश्चेन्द्रमहेन्द्रवद्देवताभेद एवेति । वाजपेययागानादरेण निर्निमित्ताधिक्येन लक्षणायां लक्षणैव दोषः । तेन सर्वथा श्रौतो त्पत्तिशिष्टामिक्षावरुद्धे कर्मणि प्रवेशमलभमानं वाजिदेवताकं वाजिनद्रव्यकं कर्मान्तरमेव कल्पयतीति सिद्धम् । तदुक्तम्—

गुणान्तरावरुद्धत्वात्पूर्वकर्मण्यसम्भवात् ।
कर्मान्तरमतिं कुर्यादात्मसङ्गतये गुणः ॥ इति ।

(तं. वा., पृ. ५३२)

गुणश्चात्र विवक्षितो भेदकः—पूर्वकर्मसम्बन्धानर्होऽपूर्वकर्म-सम्बन्धार्हश्च । तदुक्तं बृहट्टीकायाम्—

न शक्नोति च सम्बद्धुं गुणः पूर्वेण कर्मणा ।
अपूर्वकर्मसम्बन्धं यो वार्हति स भेदकः ॥ इति ।

अत्र पूर्वकर्मसंयोगानर्हस्य गुणस्य प्राप्ते कर्मण्यनेकगुणविधानासम्भवाद्भेदकत्वं पौर्णमास्यधिकरण एव प्रपञ्चितत्वान्नेह प्रपञ्चितमिति ।

प्रयोजनम्—पूर्वपक्षे एकस्मिन्नेव कर्मण्यामिक्षावाजिनयोर्विकल्पः । सिद्धान्ते तु भेदेन कर्मद्वयानुष्ठानम् ।

सूत्रन्तु—गुणश्च कर्मभेदकः । अपूर्वकर्मसंयोगे वाक्ययोः समत्वात्परस्परनिरपेक्षत्वादित्यर्थः ॥

इति नवमं गुणाधिकरणम् ॥ ९ ॥

अथ दशममिन्द्रियकामाधिकरणम्

फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥२.२.२५॥

( विषयसंशयसङ्गयः )

अग्निहोत्रं प्रकृत्य समामनन्ति—"दध्नेन्द्रियकामस्य जुहुयात्" इत्येवमादि । तत्र सन्देहः—किमग्निहोत्रहोमाद्धोमान्तरं दध्यादिहोमः ? उत दध्यादेर्गुणात्फलम् ? इति । इदानीं पूर्वप्रतिपादितस्य गुणनिमित्तस्य भेदस्यापवादः क्रियते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—भावार्थाधिकरणे ह्येतदवस्थि-

तम्—आख्यातशब्दाः फलपदसम्बन्धिनो न द्रव्यगुणशब्दाः। तदत्रापि तेनैव न्यायेन 'इन्द्रियं भावयेत्' इतीन्द्रियभावना साधनाकाङ्क्षिणी समानपदोपात्तं होम(रूपधात्वर्थ)मेव करणतया गृह्णाति, न विप्रकृष्टं द्रव्यम्। न चैवं सति फले होमविधानाद्धोमे च दधिविधानाद्वाक्यभेदः, अगत्या "दशापवित्रेण ग्रहं सम्मार्ष्टि" इतिवद्दधिमता होमेनेन्द्रियं भावयेदिति मत्वर्थलक्षणया(या विशिष्ट) विधानेनैव कर्मान्तरविधानोपपत्तेः। ननु भवतु होमात्फलम्, तथापि प्रकृत एव होमः 'सन्निधौ त्वविभागात्फलार्थेन पुनः श्रुतिः' (जै. सू., २. ३. २६) इति न्यायेन स्वर्गयावज्जीवयोरिवेन्द्रियफले विधीयताम्। मैवम्; दधिविशि(ष्टेन) होमेनोत्पत्तिवाक्यगतहोमस्वरूपाप्रत्यभिज्ञानात्। तदुक्तम्—

होमो हि प्रकृतः शुद्धः स्ववाक्यादवधारितः।
सोऽस्मिन्दधिविशिष्टत्वान्नाविभागेन गम्यते॥ इति।

(तं. वा., पृ. ५४०)

न च "दध्ना जुहोति" इति दधिविशिष्टोऽपि होमो विहित एवेति तत्प्रत्यभिज्ञानमिति वाच्यम्। यतो गुणवाक्यं ह्येतत्। न च गुणवाक्यफलवाक्ययोरुत्पत्तिवाक्यापेक्षयोः परस्परनिरपेक्षत्वात्सम्बन्धोऽस्ति। तदुक्तम्—

तान्युत्पत्तिमपेक्षन्ते सा चाव्यवहिता यतः।
गुणादीनान्त्वसम्बन्धाद्व्यवधिः स्यात्परस्परम्॥ इति।

(तं. वा., पृ. ५४१)

न चोत्पत्तिवाक्यावगतमेव कर्म गुणवाक्यापादितदधिसम्बद्धं फले विधास्यतीति वाच्यम् । नित्यानित्यसंयोगविरोधात् । एवं ह्यत्र वचनव्यक्तिः । यदेन्द्रियकामः स्यात्तदा नित्यं केवलदधिविशिष्टहोमं (भावये) दिति दधि वैकल्पिकत्वेन दशमे पक्षे सम्बध्यते । अतो यथाभूतो नित्यदधिविशिष्टो होम इन्द्रियकामवाक्ये प्रतीयते, तादृशस्याप्रत्यभिज्ञानात् , अनुपादेयं फलं प्रत्युपादानात्कर्मान्तरमेवेति । तदुक्तम्—

दध्यत्र दशमे पक्षे तद्धोमस्य विशेषणम् ।
नित्यश्चेन्द्रियकामस्य तेनापि न निरूप्यते ॥ इति ।

(तं. वा., पृ. ५४१.)

न च प्रकृतहोमाश्रितस्यैव दध्नः फले विधानमस्ति, किं विधिगौरवमत्वर्थलक्षणाश्रयणेनेति वाच्यम् । दध्नः फलसम्बन्धविधाने आश्रयसम्बन्धविधाने च वाक्यभेदप्रसङ्गात् । न च प्रकरणादाश्रयलाभ इति वाच्यम् । 'असंयुक्तं प्रकरणात्' इति न्यायेन फलार्थस्य दध्नः प्रकरणग्रहणासम्भवात् । न च विधिलक्षणप्रकरणादाश्रयलाभो भवतीति वाच्यम् । यतः शब्दो हि सन्निधिवशाद्विशेषान्वये प्रमाणम् । न तु सन्निधानं नाम यागस्य प्रमास्ति । न चात्र प्रकृताश्रयसम्बन्धप्रतिपादकः शब्दः कश्चिदस्ति । श्रौतेन्द्रियकामवाक्यस्य उभयसम्बन्धकरणे वाक्यभेदस्योक्तत्वात् ।

कल्पितशब्दस्य चाश्रयसम्बन्धकरणे कल्पनैव दोष इति श्रुतस्यैव वाक्यस्य विशिष्टकर्मविधायकत्वमेव युक्तम् । तेनात्रेन्द्रियकामवाक्ये फलस्य श्रुतत्वात्कर्मान्तरमेव विधेयं भवेदिति । एवं प्राप्तेऽभिधीयते—

अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २.२.२६ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि भावार्थाधिकरणवदेव भावार्थविषयो विधिर्भवेत् । सर्वत्र खलु भावनास्थ एव विधिस्तादर्थ्यभेदेन तत्र तत्र भिद्यते । यत्र फलवतीं भावनामासाद्य धात्वर्थपरो विधिर्भवति, तत्र धात्वर्थमेव फलकारणं करोति । यत्र तु स्ववाक्योपात्तविधेयगुणान्तरोपादानमप्यस्ति, तत्र विशिष्टविधिगौरवभिया गुणमात्रविधानलोलुपो यदि धात्वर्थप्राप्तिं पश्यति, तदा समस्तमनूद्य गुणमात्रमेव फले विधत्ते । अथ न पश्यति, तदा विशिष्टविधानं मत्वर्थलक्षणाञ्च स्वीकुरुत इति स्थितम् ।

यावद्धि विधिसामर्थ्यं धात्वर्थादनपोद्धृतम् ।
तावद्यः फलसम्बन्धः स धात्वर्थस्य गम्यते ॥
भवेत्फलश्रुतिर्या तु गुणसञ्चरिते विधौ ।
सा तद्गतविधिस्पृष्टा तेन यात्येकवाक्यताम् ॥

(तं. वा., पृ. ५४९)

तदिहापि प्रकृतधात्वर्थप्रत्यभिज्ञानात्तमुपेत्य गुणसंक्रान्तो

विधिर्गुणमेव फले विधत्ते । धात्वर्थस्तु प्रत्ययप्रयोगार्थः प्रयुक्तः ।..................क्तेन धातुना प्रकरणप्राप्तोऽनूद्यते । एवं सति मत्वर्थलक्षणादोषो विशिष्टविधिगौरवञ्च न भविष्यति । ननु भवतु धात्वर्थस्य होमरूपस्य प्राप्तत्वादनुवादः, दधिहोमसम्बधोऽप्यत्र प्रतीयते । अवश्यं प्रतिपत्तव्यश्चासौ । न ह्यनाश्रितक्रियस्य फलसाधनत्वं सम्भवति । तदत्र "दध्नेन्द्रियकामस्य जुहुयात्" इति वाक्ये प्रतीयमानो दधिहोमसम्बन्धो न तावदनूद्यते, प्रागप्राप्तत्वात् । विधीयते चेत्—तदैकस्य दध्नः फलसम्बन्धविधाने होमसम्बन्धविधाने च वाक्यभेदः स्यादिति । उच्यते—दधिहोमसम्बन्धोऽप्यत्र प्राप्त एवानूद्यते । तथाहि—दध्नेति तृतीयया करणत्वेनोपात्तं दधि विधीयते । कारकत्वञ्च धात्वर्थरूपक्रियाविशेषनिर्वर्त्तकत्वम् । तत्र कोऽसौ धात्वर्थरूपः क्रियाविशेषः ? यन्निर्वर्त्तयतोऽस्य कारकीभूतस्य फलसाधनत्वमित्यपेक्षायां सन्निधिप्रकरणोपनीतहोमरूप एव धात्वर्थस्सम्बध्यते । तेन कारकीभूतदधिपदार्थपरामर्शादेव प्रकृतहोमसम्बन्धोऽप्यस्य वाक्यात्प्रतीयमानोऽनूद्यत एव, फलसम्बन्धः परं विधीयत इति कुतो वाक्यभेदः ? तदुक्तम्—"दधिसम्बन्धोऽपि चास्य प्रकरणादेवाश्रयाश्रयिरूपः प्राप्तोऽनुवदिष्यते" (तं. वा., पृ. ५४८. पं. २१) इति ।

न च वाच्यम्—केयमाश्रयसम्बन्धविशेषापेक्षा ? किं कार-

णत्वेन ? इतिकर्त्तव्यतात्वेन वा ? इति। यतो लब्धकरणाभावस्य या तदनुग्रहाकाङ्क्षा भवति सा इह क्रियाविशेषान्वयिरूपं करणत्वमेव क्रियाविशेषान्तर्भावमन्तरेण प्रतीयत इति करणाकाङ्क्षेयं प्रविततरेत्यवधातव्यम्।

इदन्त्विह वक्तव्यम्—किं धात्वर्थवद्भावनाप्यत्र सैवानूद्यते अन्या वा विधीयते ? न तावत्सैवानूद्यते, फलभेदेन साधनभेदेन च तस्याः प्रत्यभिज्ञानासम्भवात्। न चान्या विधीयते, कर्मभेदप्रसङ्गादिति। उच्यते—न हि फलभेदेन साधनभेदेन भावना भिद्यते, किन्तर्हि ? अनुबन्धभूतधात्वर्थभेदेन। तत्र तत्र अग्निहोत्रमित्युत्पत्तिवाक्यावगतानुबन्धभूतजुहोतिधात्वर्थावच्छिन्नरूपस्य स्वर्गकामवाक्ये यावज्जीववाक्ये इन्द्रियकामवाक्ये च प्रत्यभिज्ञानात्सैव भावना। फलकरणादिभेदेन तु भेदः तस्या उपकारक एव। न च वाच्यम्—कथं प्राप्तायां भावनायामिन्द्रियसम्बन्धो दधिसम्बन्धश्च विधीयत इति। यतो न क्वचिदपि भावनायाः फलसम्बन्धो विधीयते। लिप्साधिकरण (४. १. १.) न्यायेन रागतः प्राप्तफलसम्बन्धानुवादेन साधनमात्रविधानम्। तदुक्तं कारिकायाम्—

फलांशे भावनायाश्च प्रत्ययो न विधायकः।
वक्ष्यते जैमिनिश्चात्र तस्य लिप्सार्थलक्षणा॥ इति।

अतो नात्र प्रकृतहोमाश्रयस्यैव दध्नः फले विधानमिति सिद्धं कर्मान्तरत्वम् ।

प्रयोजनम्—पूर्वपक्षे दधिहोमत्वेनापूर्वत्वात्सकृदेव केवलदधिसाधनकहोमानुष्ठानम् । सिद्धान्ते तु होमभेदात्सायं प्रातरभ्यस्तो दधिसाधनको होम इति ।

सूत्रन्तु—कर्मफलसम्बन्धगुणफलसम्बन्धवाक्ययोरतुल्यत्वात्तस्येन्द्रियफलस्य सम्बन्धो गुणे प्रतीयते । गुणादेव फलमित्यर्थः ।

इति दशममिन्द्रियकामाधिकरणम् ॥१०॥

## अथैकादशं रेवत्यधिकरणम्

समेषु कर्मयुक्तं स्यात् । ॥ २. २. २७ ॥

( विषयसङ्गती )

"त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत" "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इति । इदानीं पूर्वाधिकरणापवादेन गुणनिबन्धन एव कर्मभेदः प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—"त्रिवृदग्निष्टुत्" इत्युपक्रम्य "ब्रह्मवर्चसकामो यजेत" इत्यन्तेनाग्निष्टोमयागं विधाय, तत्रैव "वारवन्तीयमग्निष्टोमसाम कार्यम्" इति वाक्येन वारवन्तीयगुणं विधायेदं श्रूयते—"एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इति। सर्वत्र गुणाकृष्टो विधिर्यदि धात्वर्थं प्रतिपश्यति, तदा गुणमेव फले विधत्त इति स्थितम्। तदत्रापि पूर्वाधिकरणन्यायेनाग्निष्टुद्यागस्य प्राप्तत्वाद्रेवतीवारवन्तीयसङ्क्रान्तो विधिस्तमेव फले विधत्ते। अन्यदनूद्यते। तदुक्तम्—

रेवतीवारवन्तीयसम्बन्धव्यापृते विधौ।
श्रूयते फलमत्रापि यागेऽतो न विधीयते॥ इति।

(तं. वा., पृ. ५५२)

एतच्च विधिव्यापारस्थानदर्शनपरम्, न तु फलसम्बन्धविधानपरम्, फले वारवन्तीयविधानस्य वक्ष्यमाणत्वादिति। ननु वारवन्तीयस्य रेवतीसम्बन्धो न प्राप्तः। तेन सोऽपि विधातव्यः फलसम्बन्धश्चेति विध्यावृत्तिलक्षणो वाक्यभेदः स्यादिति। उच्यते—क्रियाद्वयमत्र वाक्ये श्रूयते। एका रेवतीषु वारवन्तीयाख्यगीतिक्रियाविशेषणभावेन कृत्वेति क्त्वाप्रत्ययेनोपात्ता।

अपरा रेवत्याधारवारवन्तीयेन फलक्रियाविशेष्यभूता यजेतेत्याख्यातप्रत्ययेनोपात्ता । तेनायं वाक्यार्थः—रेवतीकृतेन वारवन्तीयेन पशून् भावयेदिति । तदत्र श्रौतो विधिर्वारवन्तीयस्य फलसम्बन्धपरः क्त्वाशब्दाक्षिप्तस्तु रेवतीवारवन्तीयसम्बन्धपरः । न हि रेवतीषु वारवन्तीयाभिनिर्वृत्तिरविहिता सिध्यतीति । तदुक्तम्—

> रेवतीवारवन्तीयसम्बन्धश्च करिष्यति ।
> विनैव प्रत्ययावृत्त्या क्त्वाशब्दः संकुचच्छ्रुतिः[1] ॥ इति ।
>
> ( तं. वा., पृ. ५५२ )

ननु "वारवन्तीयमग्निष्टोमसाम कार्यम्" इति वचनेनाग्निष्टोमाख्यस्तोत्रसाधनत्वेन वारवन्तीयसाम प्राप्तमेव, रेवत्यो न प्राप्ताः । तासाञ्च वारवन्तीयसम्बन्धो न प्राप्तः । तेन तयोरन्यतरस्य फलसम्बन्धविधानमुचितम्, वारवन्तीयस्य तु कथम् ? अथ पशुफलसम्बन्धित्वेनाप्राप्तत्वाद्वारवन्तीयस्य फले विधानम् । एवन्तर्हि यागस्य पशुफलसम्बन्धो न प्राप्तस्तस्यैव विधिः स्यादिति । उच्यते—यद्यपि यागोऽपि फलसाधनत्वेनाप्राप्तः, तथापि विशेषणोपादानाद्गौरवभिया विधायको गुणाक्षिप्तो धात्वर्थानुवादो विशेषणमेव फले विधत्ते । विशेषणञ्चात्र क्त्वाशब्देन प्रतिपादनीयम् । स चाधिकरणनिर्देशात् वारवन्तीयार्था रेवतीः प्रतिपाद्य द्वितीयानिर्देशात्प्राधान्येन वारवन्तीयमेवाख्यातार्थस्य विशेषणी-

---

१. पृथक्छ्रुतिः इति मुद्रितवार्तिकपुस्तकपाठः ।

करोति। तेनात्र विशेषणपरेणाख्यातेन रेवतीः प्रति प्रधानस्य वारवन्तीयस्यैव फले विधानम् नान्यस्येति। तदुक्तम्—

अत्राप्याधारनिर्देशाद्रेवतीनां परार्थता।
प्राधान्याद्वारवन्तीयं फलं प्रति विधीयते॥

(तं. वा., पृ. ५४२)

ननु साध्या हि क्रिया फलसाधनगुणाश्रया भवति, दध्न इव होमः। न चाग्निष्टुद्यागो वारवन्तीयसामसाध्यः, अग्निष्टोमस्तोत्रसाध्यत्वात्। अतः कथं यागमाश्रित्य वारवन्तीयस्य फलसाधनत्वमिति। उच्यते—न हि सर्वत्र साध्यस्यैवाश्रयत्वमिति नियमः। "यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात्" इत्यादिष्वसाध्यस्याप्याश्रयत्वात्। अत्र हि सदोमानमाश्रित्य नीचैस्त्वं फलं साधयति। न च सदोमानं नीचैस्त्वसाध्यम्, तस्य सदोमानधर्ममात्रत्वात्। तेन यथासम्भवं सम्बन्धमात्रेणैवाश्रयत्वम्, तदिहापि वारवन्तीयस्य दधिवद्यागकरणस्यापि क्त्वाशब्दप्रतिपादितपौर्वापर्यलक्षणयागसम्बन्धस्याख्यातोपात्तविधिविषयत्वम्। तत्र कोऽसौ याग इत्याकाङ्क्षायां सन्निधिलक्षणप्रकरणप्राप्ताग्निष्टुद्याग एव सम्बध्यते। स एव यजतिनानूद्यते। पौर्वापर्यमपि न विधेयम्, तस्यापि प्राप्तत्वात्। तथाहि—"अग्नीष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत" इत्यनेना-

ग्निष्टोमस्तोत्रस्य तावद्यागपूर्वभावित्वमवगतमेव । तदेव "वारयन्तीयमग्निष्टोमसाम कार्यम्" इत्यनेन वाक्येनाग्निष्टोम-स्तोत्रस्य वारवन्तीयसाधनत्वावगमादवगतमेव पौर्वापर्यं त्त्वाशब्दे-नानूद्यते । एवमग्निष्टोमस्तोत्रसम्बन्धश्च वारवन्तीयस्य पूर्ववाक्यप्राप्त एवानूद्यते । अत्र च यद्यपि यागस्तोत्रयोरनुष्ठानपौर्वापर्यं विपरीतं, प्रथमं यागानुष्ठानम्, तथाप्यग्निष्टुद्वाक्य एवाग्निष्टोमसाम कृत्वेति प्रतीयते । पौर्वापर्यपर एवायं त्त्वाशब्दः अनुवादेऽपि तथैव द्रष्टव्य इति । एतस्यैवेति शब्दश्च प्रकरणप्राप्तयागसम्बन्धानुवादः । एवकारश्चाश्रयान्तरनिवृत्त्यर्थोऽनुवादकः । एवं सर्वमेवानूद्यते । रेवत्याधारवारवन्तीयमात्रं फले विधीयत इति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि वारवन्तीयाग्निष्टुद्यागयोराश्रया-श्रयिभावः कथञ्चिदपि सम्भवेत् । न चैतदस्ति, परस्पराकाङ्क्षा-भावात् । तथाहि—साध्यं हि साधनस्याश्रयो भवति । यथा होमो दध्नः । न चाग्निष्टुदुभयोर्द्रव्यदेवताकर्तृसाध्यत्वेन तदतिरिक्तं साधनमपेक्षते । तदुक्तम्—

द्रव्यदैवतकर्तृभ्यो नातिरिक्तमपेक्षते ।
यागः साधनमित्येवं साम्ना नैवैष साध्यते ॥ इति ।

( तं. वा., पृ. ५५३ )

सामसाध्यत्वेनाश्रयत्वयोग्यमग्निष्टोमस्तोत्रम्, न तस्य प्रकरणम्, आतिदेशिकत्वात्। अग्निष्टति स्तोत्राणां बहूनां विनिगमनाप्रमाणाभावात्। नापि वारवन्तीयक्रिया फलसिद्धये क्रियान्तरमपेक्षते, स्वत एव साध्यरूपत्वात्। तदुक्तम्—

आत्मना ह्यक्रियारूपैर्गुणैराश्रीयते क्रिया।
वारवन्तीयगीतेस्तु क्रियया किं प्रयोजनम्॥

(तं. वा., पृ. ५५६)

नाप्यग्निष्टोमस्तोत्रद्वारेण यागाश्रयत्वं वारवन्तीयसाम्नो वक्तव्यम्। क्रियायाः फलसाधनत्वेन क्रियान्तरापेक्षाया अभावादेवेति मन्तव्यम्। तेन यदेतत्पक्षाश्रयणेन नानाविधवाक्यभेदापादनं वार्त्तिककारपादैर्दर्शितम्, तदनतिप्रयोजनत्वान्नेह दर्शितमित्यवधातव्यम्। ननु गीतित्वेन क्रियारूपस्यापि सौभरस्य पश्वादिफलसाधनत्वेन स्तोत्ररूपक्रियान्तरापेक्षा दृष्टैव, तद्द्वारवन्तीयस्य क्रियारूपस्यापि क्रियान्तरापेक्षेति यागो वा स्तोत्रं वाश्रयो भविष्यतीति। मैवम्; सौभरेणेति तृतीया क्रियारूपाभिभवेन करणत्वेन सौभरं विनियुङ्क्ते। तेन च रूपेण क्रियान्तरापेक्षायां भवतु स्तोत्रमाश्रित्य फलसाधनत्वं सौभरस्य। इह तु "वारवन्तीयं कृत्वा" इति क्रियारूपेणैव वारवन्तीयोपादानात् क्रियायाश्च क्रियान्तरानपेक्षत्वाद्वैषम्यमिति।

ननु "नीचैः सदो मिनुयात्" इत्येवमादिषु असाध्यस्याप्याश्रयत्वमुक्तम्। नैवम्; वाक्यार्थानवगमात्। तथाहि त्रिविधं हस्तमानं शास्त्रोक्तम्—षट्पदसप्तपदाष्टपदभेदात्। तत्र पादावृत्तिः काम्यमाना भवति। तदाष्टपदपरिमितेन नीचैर्हस्तेन षोडशहस्तादिसदोमानं कर्त्तव्यम्। तत्र हस्तगतस्य नीचैस्त्वस्य सदोमानं साध्यमेवेति न ततोऽस्य व्यभिचारः। असाध्यस्यापि वा भवत्वाश्रयत्वम्, तथापि नीचैस्त्वस्य धर्मत्वेन नित्यं धर्मिसापेक्षत्वाद्भवतु सन्निहितसदोमानाख्यधर्मिसम्बन्धः। वारवन्तीयगीतेस्तु रेवत्याधारत्वेनावगताया न प्रकृतयागाकांक्षा केनापि रूपेणास्तीति न तदाश्रयत्वम्।

ननु वारवन्तीयस्य (स्वभावे (?) सम्बन्धा) तद्गतापेक्षायामपि क्त्वाशब्दवशादेव यागापेक्षा भवति। तथाहि—वारवन्तीयं कृत्वा यजेतेत्यत्र क्त्वाशब्दाद्वारवन्तीयस्य सह यागेन पौर्वापर्यं प्रतीयते। तत्र कोऽसौ याग इत्यपेक्षायां सन्निधिलक्षणप्रकरणेन पूर्वावगतवारवन्तीयपौर्वापर्येऽप्यग्निष्टुद्याग एव प्रतीयते। नापेक्षितपौर्वापर्यसम्बन्धादेवाश्रयाश्रयित्वम्, यजिरपि भूतानुवादक एवेत्युक्तम्। नैवम्; रेवत्याधारवारवन्तीयगीतियागपौर्वापर्यमत्र क्त्वाप्रत्ययात्प्रतीयते। न वायव्याधारवारवन्तीयसम्बन्धः फलसम्बन्धश्च कर्त्तुं शक्यते। अतो यथाभूतं पौर्वापर्यमत्र प्रतीयते,

तथाभूतस्याप्राप्तत्वात्कथमनुवादः ? न चानेनैव वाक्येनाग्निष्टु-द्यागस्य रेवत्याधारवारवन्तीयसम्बन्धः फलसम्बन्धश्च कर्त्तुं शक्यते, वाक्यभेदप्रसङ्गात् । अत आश्रयाकाङ्क्षायां भावनाश्रयत्वेन प्राप्तो यागोऽनुवदितुं शक्यते ।

किञ्च—अग्निष्टोमस्तोत्रसम्बन्धो वारवन्तीयस्य कुतः प्राप्तोऽनूद्यते ? न तावदग्निष्टुद्यागद्वारेणेति मन्तव्यम्, तस्यानेकस्तोत्र-विनिगमनाप्रमाणाभावात् । न च "वारवन्तीयमग्निष्टोमसाम कार्यम्" इत्येतद्वाक्यप्राप्त एव वारन्तीयस्याग्निष्टोमस्तोत्रसम्बन्धोऽनूद्यते इति वाच्यम् । गुणवाक्यानां प्रधानोत्पत्तिसापेक्षत्वेन गुणवाक्यान्तरानपेक्षत्वस्योक्तत्वात् । न चोत्पत्तिवाक्येन एत-द्वाक्यप्रतिपादितो वारवन्तीयस्याग्निष्टोमसम्बन्धोऽनूद्यत इति वाच्यम् । क्रत्वर्थवारवन्तीयाग्निष्टोमसाधनत्वस्य पुरुषार्थवारवन्तीयसम्बन्धित्वे-नाप्राप्तस्यानुवदितुमशक्यत्वात् । तेनानेनैव वाक्येन वारवन्तीय-स्याग्निष्टोमस्तोत्रसम्बन्धो विधातव्यः फलसम्बन्धश्चेत्यपरो वाक्य-भेदः । अतो न गुणात्फलम्, किन्तु यागादेवेति सिद्धं कर्मा-न्तरत्वमिति ।

ननु यागन्तरविधानेऽपि वाक्यभेदस्तदवस्थ एव । तथाहि—रेवतीषु वारवन्तीयाग्निष्टोमस्तोत्रसम्बन्धो विधातव्यः, फलसम्बन्ध-श्चेत्यपरः । साम कृत्वेत्यनेनाग्निष्टोमस्तोत्रे रेवतीवारवन्तीयसम्बन्धो

विधातव्यः। स च क्रियान्तरविशेषणत्वान्न विशिष्टयागो विधिना विधातुं शक्यत इति तदर्थं विधिरावर्त्तनीय इति विध्यावृत्तिलक्षणो वाक्यभेद एवेति। उच्यते—स्यादेवं यद्यग्निष्टोमस्तोत्रविशेषण-त्वेन वारवन्तीयसम्बन्धो विधीयते। किन्तर्हि? यागभावना-विशेषणत्वेनैव। तथाहि—क्त्वाशब्दार्थस्तावदिहायाग एव विशेषणम्। स च क्त्वाशब्दार्थो भावनाविशेषणम्। स च रेवतीवारवन्तीयसम्बन्धापनयद्वारेणैव विशेष्यरूपः, यतो याग-विशेषणम्। तेन रेवतीवारवन्तीयसम्बन्धस्य यागभावनाविशेष-णत्वाद्विशिष्टविधिनैव विधानम्, न वाक्यभेदः। तदुक्तम्—

क्त्वाशब्दार्थमेवैकं गृह्णीते भावनोत्तरा।
सोऽपि स्वगोचरप्राप्तं ग्रहीष्यति विशेषणम्॥ इति।

(तं॰ वा॰, पृ॰ ५५६)

तस्य रेवतीवारवन्तीयसम्बन्धस्यायागसाधनत्वेन यद्यपि यागभावनाविशेषणत्वं साक्षान्न सम्भवति, तथाप्यानर्थक्यतदङ्ग-न्यायेन तदङ्गभूताग्निष्टोमस्तोत्रसाधनत्वद्वारेण निर्वर्त्स्यति। तस्य च स्तोत्रस्य वारवन्तीयसम्बन्धोऽतिदेशप्राप्त एव, वारवन्तीय-द्वारेण च रेवतीसम्बन्धस्यापि प्राप्तत्वान्न पृथग्विधानापेक्षेति न किञ्चिदनुपपन्नम्। यद्यपि चात्र विशिष्टविधानन्यायेन बहव एव विधातुं शक्यन्ते, तथाप्यग्निष्टुद्यागविकारत्वादस्यातिदेशादेव

वारवन्तीयसामसाध्याग्निष्टोमस्तोत्रं प्राप्तम् । एतच्छन्दश्च "अथैष ज्योतिः" इतिवत्प्रस्तोष्यमाणकर्मानुवाद एवेति न विधिना रेवतीवारवन्तीयसम्बन्धविशिष्टयागभावना विधीयते । आप्तिस विधिना च रेवतीवारवन्तीयसम्बन्ध इति न किञ्चिदनुपपन्नम् ।

प्रयोजनम्—पूर्वपक्षे रेवत्याधारं वारवन्तीयमग्निष्टुद्याग एवानुष्ठेयं पशुकामेन । सिद्धान्ते तु रेवत्याधारवारवन्तीयकं कर्मान्तरमेवानुष्ठेयमिति ।

सूत्रन्तु—समेषु परस्परनिरपेक्षेषु कर्मसम्बद्धमेव फलं न गुणसम्बद्धमिति ॥

इत्येकादशं रेवत्यधिकरणम् ॥ ११ ॥

## अथ द्वादशं सौभराधिकरणम्

### सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ २. २. २८ ॥

( विषयसंशयसङ्गतयः )

"यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत, सर्वे वै कामाः सौभरम्" इति समाम्नाय समामनन्ति— "हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय" इति । तत्र विचार्यते—किं सौभरं वृष्टेर्निमित्तं हीषित्येतदपरं वृष्टेर्निमित्तम् ? अथ सौभरमेव वृष्टेर्निमित्तम्,

तदा हीषिति सौभरस्य निधनं कर्त्तव्यमिति । एवम् "ऊर्गित्यन्नाद्य-कामाय ऊ इति स्वर्गकामाय" इति तुल्यो विचार इति । अस्य च कर्मभेदाभेदनिरूपणत्वाभावेऽपि फलसम्बन्धपदप्रसङ्गेन सङ्गतिः । अत्र भाष्यकारीयमधिकरणशरीरोपदर्शनमेतद्वार्त्तिककारपादानाम-प्यनुमतमेव, किन्तु "हीषिति वृष्टिकामाय निधनं कुर्यात्" इत्यादि-विचारविषयानुगुणवाक्यत्रये वचनव्यक्तिविभागेन सन्देहो दर्शितः— यदा हीषिति वृष्टिकामायेति सम्बन्धो विवक्षितः, तदा फलगुणविधानम् । अथ हीषिति निधनं कर्त्तव्यमिति सम्बन्धः, तदा निधनव्यवस्थार्थं श्रवणमिति । तन्नानुमन्यन्ते, सिद्धान्त वचनव्यक्तौ वृष्टिकामपदव्यवधानेन हीषिति निधनं कुर्यादिति सम्बन्धानुपपत्तेः । तदुक्तम्—

न तावत्संशयो युक्तो वचनव्यक्तिभेदतः ।
हीषो निधनसम्बन्धो नेष्टो हि व्यवधानतः ॥ इति ।

( तं. वा., पृ. ५६६ )

तथा सिद्धान्तोऽप्यनुपपन्नः, सौभरसम्बन्धिनिधनानुवादेन हीष्विधौ वृष्टिकामपदमनर्थकम् । अथ वृष्टिकामस्य यदि सौभरं तत्सम्बद्धं निधनं हीष् कर्त्तव्यम् , तदा विशिष्टानुवादादुद्दिश्यमान-विशेषणविवक्षायां वाक्यभेदः । तदुक्तम्—

निधने हीष्विधानं चेद्वृष्टिकामविशेषिते ।
विशिष्टार्थानुवादत्वाद्वाक्यभेदः स्फुटो भवेत् ॥ इति ।

(तं. वा., पृ. ५६६)

तस्माद्धीषादिपदस्य वृष्टिकामपदसम्बन्धापरित्यागेनैवात्र संशयो वर्णनीयः—किं हीषा वृष्टिं कुर्यादिति साक्षादेव हीषो वृष्टिफले विधानम्? अथ वृष्टिकामपदेन लक्षिते वृष्टिसाधने सौभरे हीषो विधानम्? इति।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—श्रौतार्थस्यैवान्वयोपपत्तौ लक्षणाश्रयणं सर्वत्रैवानुपपन्नम्। सम्भवति चेह हीषित्यस्य श्रौत-वृष्टिफलसम्बन्धः। साधनलक्षणायां वचनेन तावत्सौभरमात्रं लक्षणीयम्। तथा च सति हीषिति पदस्याप्राद्यकामप्रयोगेऽपि प्राप्तौ नियमानुपपत्तिः। नापि वृष्टिफलविशेषितं सौभरं लक्षणीयम्। तथा सति विशिष्टानुवादेन वाक्यभेदप्रसङ्गस्य तदवस्थत्वात्। तेन दध्नेन्द्रियवत्, प्रकृतसौभराश्रितस्य वृष्टिफले विधानम्। ननु साध्यः खल्वाश्रयो भवति। न चानेकपदसाध्या सौभरगीतिर्हीषिति पदमात्रेण साधयितुं शक्यते। अतः कथमाश्रयत्वमिति। उच्यते—यदनन्तरं यन्निष्पद्यते, तत्तस्य साधनं भवति, पदार्थज्ञानस्येवान्तिमो वर्णः। सौभराख्यसाम्नो हीषिति पदानन्तरमेव निष्पत्तेः तदेव तस्य साधनम्, इतराणि तु पदानि तदनुग्राहकाण्येवेति युक्तमाश्रयत्वम्। एवञ्च सति फलातिरेकोऽपि पुरुषसमीहितो भवतीति युक्तं गुणफल-

विधित्वम् । तेन वृष्टिकाम इति काम्यमानफलसम्बन्धिपुरुषश्रुतेः सौभराश्रितहीष्निधनस्य काम्यमानफलसम्बन्ध इति । एवं प्राप्तेऽभिधीयते—

सर्वस्योक्तकामत्वात् तस्मिन् कामश्रुतिः स्यान्नि-
धनार्था वा पुनः श्रुतिः ॥ २. २. २९ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि सौभरसम्बन्धिवृष्टिकामादिप्रत्यभिज्ञानमत्र भवेत् । तथाहि—यौगिको ह्ययं वृष्टिकामादिशब्दः । यौगिकानाञ्च सर्वेषां व्यक्तिवाचित्वम् । व्यक्तिवचनानाञ्च प्रकृतव्यक्तिपरत्वे सम्भवति अप्रकृतव्यक्तिपरत्वस्यान्याय्यत्वात् सौभरसम्बन्धिसन्निहितवृष्टिकामादिपरत्वमेव युक्तम् । न च तथा सति प्रकृतानुवादस्य निष्प्रयोजनत्वम्, सौभरसम्बन्धिनिधनव्यवस्थार्थत्वेनैवार्थवत्त्वात् । तथाहि—सौभरस्य व्याख्याभेदेन हीषिति वृष्टिकामाय ऊर्गिति ऊ इति निधनत्रयमाश्रीयते । फलत्रयञ्च तत्र श्रूयते—वृष्टिरूपमन्नाद्यरूपं स्वर्गरूपञ्च । तत्र कस्मिन् फले सौरभस्य किं निधनमित्यपेक्षायां भवति सौभरानुवादेन निधनव्यवस्थार्थानि वचनानि—"हीषिति वृष्टिकामाय निधनं कुर्यादूर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाय" इति ।

तदुक्तम्—

सौभरस्य[1] यदा कामः श्रुत्यैवाभिहितः पुरा ।
नियन्तुं निधनं तस्य स एवायमनूद्यते ॥ इति ।

(तं. वा., पृ. ४६७.)

नापि गुणफलसम्बन्धः सम्भवति । प्रकृतस्य सौभरस्य हीषाद्यसाध्यत्वेनाश्रयत्वासम्भवात् । न च तदनन्तरनिष्पत्तेः पदार्थज्ञानस्येवान्तिमो वर्णः सौभरस्याप्यन्तभूतं हीषाद्येव साधनमिति वक्तव्यम् । यतो हि निर्भागं हि ज्ञानं तदनन्तरं निष्पद्यते तदेव तस्य साधनमितिवत् संस्कारद्वारेण तदनुग्राहकमिति युक्तं सौभरं सभागं न हीषिति पदमात्रसाध्यं भवितुमर्हति । न च वाच्यम्—सौभरस्य निधनमेवाश्रितफलं साधयिष्यतीति । तस्याप्रकृतत्वात् । सौभरं हि प्रकृतम्, न तु तद्गुणभूतं निधनम् । अतो न प्रकरणादाश्रयलाभः । वाक्ये चाश्रयसम्बन्धकरणे फलसम्बन्धकरणे च वाक्यभेद एव । तदुक्तम्—

यथैव वारवन्तीयं नेष्टमाश्रयमाप्नुयात् ।
फले तथैव हीषादि नाप्नोत्याश्रयमीप्सितम् ॥ इति ।

(तं. वा., पृ. ५६७.)

अतोऽनुवादभूतमिदं वृष्टिकामादिपदम् । न च हीषादि-

---

१. सौभरस्य समस्तस्य यःकामोऽभिहितःपुरा इति मुद्रितवार्तिकपाठः ।

निधनसम्बन्धो वृष्टिकामे सम्भवतीत्यसम्भवेन स्वसम्बन्धयोग्यं सौभरं लक्षयतीति न दोषः ।

ननु वृष्टिकामपदे सौभरमात्रलक्षणायां नियमानुपपत्तिः । वृष्टिफलविशेषितत्वेन विशिष्टानुवादाद्वाक्यभेद इत्युक्तम् । मैवम् ; स्यादेवं यदि वृष्टिफलविशेषितं सौभरं लक्षणाविषयः, न चैतत्सम्भवति । स्वार्थलक्षणाप्रमाणाभावात् । न च सौभरमात्रं लक्षितं श्रौतेन वृष्टिफलेन विशेष्टुं शक्यते, युगपच्छ्रुतिलक्षणाविरोधात् । तेन यथा गङ्गायां घोषो वसतीत्यत्र गङ्गापदेन तीरं लक्ष्यमाणं स्वसम्बन्ध्येव लक्ष्यते, तथात्रापि वृष्टिकामपदेन सौभरं लक्ष्यमाणं वृष्टिसाधनशक्त्युपेतमेव लक्ष्यते । अतो न वाक्यभेदः, नाप्यव्यवस्थेति सिद्धं निधनव्यवस्थार्थमिति ।

प्रयोजनम्—पूर्वपक्षे वृष्टिफलार्थोऽपि सौभरे फलान्तरसमीहया निधनान्तरप्रयोगः । सिद्धान्ते तु हीष एव प्रयोगः । एकैव तु वृष्टिः कामयितव्येति ।

सूत्रन्तु—सर्वस्यैव सौभरस्य वृष्ट्यादिसाधनस्योक्तवृष्ट्यादिकामत्वात् तस्मिन्नेव सौभरसम्बन्धिकाम इयं श्रुतिस्तदनुवादिकेत्यर्थः ॥

इति द्वादशं सौभराधिकरणम् ॥१२॥

इति श्रीबालवलभीभुजङ्गापरनाम्नो भट्टभवदेवस्य कृतौ तौताततिमततिलके द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

## अथ द्वितीयाध्यायस्य तृतीयः पादः

### तत्र प्रथमं रथन्तराधिकरणम्

**गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत्, संयोगस्याशेषभूतत्वात् ॥ २. ३. १. ॥**

( विषयसंशयसङ्गतयः )

अस्ति ज्योतिष्टोमः—"ज्योतिष्टोमेन स्वर्गकामो यजेत" इति। तं प्रकृत्य श्रूयते—"यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान्, ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्" इति। तत्र सन्दिह्यते—किं ग्रहाग्रताविशेषो ज्योतिष्टोमस्य विधीयते ? उत कर्मान्तरस्य रथन्तरसाम्नो बृहत्साम्नश्चेति। अत्र तु गुणनिमित्तकर्मभेदापवादादध्यायसङ्गतिः। प्रकृतसङ्गतिश्चापवादः।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—"रथन्तरसामा सोम" इति बहुव्रीहिसमासोऽयमन्यपदार्थप्रधानः। अन्यपदार्थश्चात्र सोमशब्दलक्षितो रथन्तरसामविशिष्टो याग एव। विशेषणञ्च स्वजातीयान्ययोगव्यच्छेदेनैव भवति। तेन रथन्तरमेव साम अस्य यागस्यासौ रथन्तरसामा यागः। न च प्रकृतौ ज्योतिष्टोमो रथन्त-

रैकसामा। तेन रथन्तरैकसामत्वलक्षणस्य गुणस्य वाजिनस्येव प्रकृतकर्मासंयोगात्, विशिष्टकर्मान्तरविधानमेवैतत्। तदुक्तम्—

समासः सति सामर्थ्ये तच्चापीष्टं विशेषणे।
विशेषणं व्यवच्छेत्तृ ज्योतिष्टोमे च नास्ति तत्॥ इति।

( तं. वा., पृ. ५७१ )

ननु यदिशब्दसंयोगान्निमित्तत्वमत्र प्रतीयते। तच्च पूर्वसिद्धस्यैव भवति। अतः कथं कर्मान्तरविधानम्? नैवम्; न हि प्रतीतमित्येतावतैव सर्वं क्रियते। किं तर्हि? यद्युपपद्यते। न च प्रकृतमप्रकृतं वा रथन्तरैकसामकं कर्मास्ति, यस्य यदिशब्दान्निमित्तत्वमवगम्येत। तेन निमित्तरूपप्रसिद्धार्थपरित्यागेन "अथैष ज्योतिः" इतिवद्विधास्यमानकर्मपरामर्शक एवायं यदिशब्दः। निपातानामनेकार्थत्वादेवकारार्थ एवायम्। यथा—यदि वेदाः प्रमाणम् तदा अवश्यमेव यागात् फलेन भवितव्यम्। अथवा विधिर्हि रुचिमुत्पाद्य प्रवर्त्तयति। तेन विध्याक्षिप्ताया एव रुचेर्निमित्तत्वं यदिशब्दोऽनुवदति। तेन रुचिपदाध्याहारेणायं वाक्यार्थः—यदि रोचते ततो रथन्तरैकसामानं क्रतुं कुर्यादिति। अत्र च पक्षद्वयेऽपि "ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्" इति वाक्यान्तरमेव। तदर्थस्यैन्द्रवायवाग्रतायास्तु ज्योतिष्टोमस्य क्रमान्तरयुक्तग्रहश्रवणेन निराकाङ्क्षत्वात् प्रकृतयागाङ्गत्वमवान्तरप्रकरणेनेति।

यदि वा एकवाक्यत्वमेवाङ्गीकृत्य यदिशब्दस्य व्यवधानेन सम्बन्धः कर्तव्यः—यद्यैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् ग्रहीतुमिच्छेत्, रथान्तरैकसामानं क्रतुं कुर्यादित्यर्थः। अत्र च "ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्" इत्ययं लिङ्शब्दः कामप्रवेदने। "रथन्तरसामा सोमः स्यात्" इति तु विधायक इति।

अथवा हेतौ हेतुमति वा लिङ्शब्दः। तत्र यदि स्यादिति लिङ्शब्दो हेतुत्वप्रतिपादकः, गृह्णीयादिति तु विधायकः। तदायमर्थः—ऐन्द्रवायवाग्रताहेतुभूतः सोमयागः कर्त्तव्य इति। अत्रापि पक्षे कल्पितविधिना ऐन्द्रवायवाग्रताविधानमिति। अत्र चोभयत्रापि यदिशब्दो रथन्तरैकसामयागस्य ग्रहाग्रतानिमित्तत्वानुवादकः। उभयपक्षेऽपि यद्येवं तदा ग्रहाग्रतेत्यस्यार्थस्याविशेषादिति। एकवाक्यत्वपक्षे च ऐन्द्रवायवग्रहाग्रताया अङ्गत्वं वाक्येनैव। तदुक्तम्—

यदिशब्दपरित्यागो रुच्यध्याहारकल्पना।
व्यवधानेन सम्बन्धो हेतुहेतुमतोश्च लिङ्॥ इति।

(तं. वा., पृ. ५७७.)

किञ्च प्रातस्सवने ग्रहाग्रता भवति, माध्यन्दिने रथन्तरम्। न चानिष्पन्नं निमित्तं भवति। अतोऽपि न रथन्तरं निमित्तम्, किन्तु याग एव। किञ्च जगत्सामेति यदुक्तम् तच्च ज्योतिष्टोमधि-

षयमित्युभयवादिसिद्धमेव । तत्समाननिर्देशयोरपि रथन्तरसामबृहत्सामपदयोर्न ज्योतिष्टोमविषयत्वमिति । तेन रथन्तरैकसामत्वलक्षणो गुणः कर्मान्तरं ज्योतिष्टोमव्यतिरिक्तं गमयेत् । रथन्तरसंयोगस्य विशेषणत्वेन नाविशेषणभूतत्वात् (?) कृत्स्नक्रतुसंयोगादिति । एवं प्राप्तेऽभिधीयते—

एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥ २. ३. २. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेयं यद्यत्र रथन्तरसामत्वलक्षणो गुणः यदिशब्दोपबन्धो निमित्तत्वेन प्रतीयमानः प्रकृते कर्मणि न सम्भवेत् । सम्भवति तु "रथन्तरं पृष्ठं भवति" इति वचनेन ज्योतिष्टोमे रथन्तरस्य विहितत्वात् । ननु "रथन्तरसामा सोमः" इत्यत्र रथन्तरैकसामत्वमवगम्यत इत्युक्तम् । न च तथाभूतो ज्योतिष्टोम इति कथं तत्रास्य निमित्तार्थतया सम्बन्धः ? इति । उच्यते—द्विविधं हि विशेषणं भवति—व्यापकमव्यापकं च । तत्र व्यापकं विशेषणं सजातीयान्ययोगव्यवच्छेदकमेव । यथा—नीलमुत्पलमिति । अत्रोत्पलस्य नीलत्वम् । अव्यापकन्तु विशेषणं स्वायोगव्यवच्छेदेनैव । यथा-दण्डी पुरुष इत्यत्र पुरुषस्य दण्डः । ज्योतिष्टोमे च "रथन्तरं

पृष्ठं भवति" "बृहत्पृष्ठं भवति" इति वैकल्पिकत्वात् रथन्तरस्य स्वायोगव्यवच्छेदेनैव रथन्तरस्य विशेषणत्वम् । तत्र यद्यपीतराण्यपि सामानि रथन्तरस्य सजातीयानि, तथापि बुद्धिसन्निहितं व्यवच्छेद्यं व्यवच्छेदकेन व्यवच्छिद्यते । इतरसाम्नाञ्च बुद्धिसन्निधानं ज्योतिष्टोममहाप्रकरणेन बहिरङ्गम्, पृष्ठावान्तरप्रकरणेन च बृहद्रथन्तरयोर्बुद्धिसन्निधानमन्तरङ्गम् । अतो बृहद्व्यवच्छेदेनैव रथन्तरस्य विशेषणत्वं, रथन्तरव्यवच्छेदेन बृहतो विशेषणत्वमिति । अथ क्रतुविशेषितस्य रथन्तरस्यैव यदिशब्देन निमित्तत्वं प्रतिपाद्यते, तथाच सति ज्योतिष्टोमस्य रथन्तरव्यापकत्वात् क्रत्वन्तरव्यवच्छेदेनैव विशेषणत्वम् । तेनायमर्थः—ज्योतिष्टोमस्यैव रथन्तरमैन्द्रवायवाग्रतानिमित्तम् ।

ननु "रथन्तरसामा सोमः" इत्यत्र रथन्तरस्यैव विशेषणत्वं प्रतीयते, न तु सोमयागस्य । सत्यम्; समासपदान्न प्रतीयते, विग्रहवाक्यात्प्रतीयत एव । एवं हि विग्रहवाक्यम्—रथन्तरं साम यस्येति । अत्र च षष्ठ्यन्तत्वात् क्रतोरेव विशेषणत्वमवगम्यते । एतच्च समासपदादप्रतीयमानमपि यदिशब्दप्रतिपादितनिमित्तत्वानुरोधेन ज्योतिष्टोमप्रकरणानुरोधेन च स्वीक्रियमाणं कर्मान्तरकल्पनातो लघुतरमिति न दोषायेति ।

ननु निमित्तस्योद्देश्यत्वात् तद्विशेषणाविवक्षायां वाक्यभेदः

स्यात्। तेन रथन्तरस्य निमित्तत्वे कथं क्रतोर्विशेषणत्वम्? क्रतोर्वा निमित्तत्वे कथं रथन्तरस्य विशेषणत्वम्? इति। उद्देश्यविशेषणविवक्षायां हि वाक्यभेदो भवति, न पुनर्विशिष्टोद्देशे। यथोक्तम्—मृष्यामहे हविर्विशेषणमिति। तेन यथा आर्त्तेः केवलाया निमित्तत्वासम्भवात् हविर्विशेषणभूताया एव निमित्तत्वेनोद्देश्यत्वम्, तथा इहापि केवलस्य क्रतोर्बृहद्रथन्तरसामाधारस्य वैकल्पिकग्रहाग्रतानिमित्तत्वासम्भवात्, केवलस्य रथन्तरस्य क्रतुसम्बन्धे ग्रहाग्रतानिमित्तत्वासम्भवात् युक्तं विशिष्टस्यैवोद्देश्यत्वमिति। तच्च निमित्तत्वं यद्यपि प्रातस्सवने ग्रहाग्रता माध्यन्दिने रथन्तरम्, तथापि बुद्धिस्वीकृतस्यापि निमित्तत्वोपपत्तेर्नानुपपन्नम्। ननु जगत्सामाशब्दस्य न ज्योतिष्टोमपरामर्शकत्वम्, तदसम्भवात् तथा भवतु नाम। न हि ज्योतिष्टोमे जगत्साम समस्ति, अस्ति तु विषुवत्सामके कर्मणि। जगत्याधारगीयमानं साम जगत्साम। तेन भवतु तस्य तद्विषयत्वम्, न चेह तथेति वैषम्यम्। अतो नात्र कर्मान्तरत्वमिति सिद्धम्।

प्रयोजनम्—पूर्वपक्षे रथन्तरैकसाम्नो बृहदेकसाम्नश्च कर्मणो भेदेनानुष्ठानम्। सिद्धान्ते तु ज्योतिष्टोमस्यैव वैकल्पिकग्रहाग्रानुष्ठानमिति।

तन्त्रन्तु—एकस्यैव ज्योतिष्टोमस्य तेन तेन रथन्तरसामत्वेन

बृहत्सामत्वेन च चिह्नभेदेन ग्रहाग्रत्वगुणविधानार्थमुच्येत अभिधानं क्रियेत एकत्वं कर्मान्तरत्वं गुणवाक्यत्वात् गुणविधानपरत्वादित्यर्थः ॥

इति प्रथमं रथन्तराधिकरणम् ॥ १ ॥

## अथ द्वितीयमवेष्ट्यधिकरणम्

### अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते ॥ २. ३. ३. ॥

( विषयसंशयसङ्गतयः )

अस्ति राजसूयः "राजा राजसूयेन स्वाराज्यकामो यजेत"। इति। तं प्रकृत्यामनन्ति अवेष्टिं नामेष्टिम्, "आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा" इति। एवमादिकां प्रकृत्याभिधीयते "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत्, यदि राजन्य ऐन्द्रम्, यदि वैश्यो वैश्वदेवम्" इति। तत्र सन्दिह्यते—किं ब्राह्मणादीनां प्राप्तानां निमित्तत्वेन श्रवणम्? उत ब्राह्मणादीनामयं प्रयोगो विधीयते? इति। इदानीं गुणनिमित्तकर्मभेदाभेदप्रतिपादनप्रसङ्गेन प्रयोगभेदः प्रतिपाद्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यौगिकः खल्वयं राजशब्दः, राज्ययुक्तो हि राजेति महाजनप्रसिद्धेः। राज्यञ्च जनपदपुरपरिपाल-

नबलिषड्भागग्रहणम्। तच्च सर्ववर्णसाधारणमेव। तेन "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यत्र विद्याग्निरहितत्वेन शूद्रस्यानधिकारात् त्रयाणामेव ब्राह्मणादीनामधिकारः। तथा च सति "यदि ब्राह्मणो यजेत" इत्यादिवाक्येषु पूर्वाधिकरणन्यायेन निमित्तार्थमेव ब्राह्मणादीनां श्रवणमिति।

ननु राज्ञः कर्म राज्यमिति हि स्मरन्ति। अत्र हि प्राक्प्रसिद्धराजशब्दार्थस्य कर्म राज्यमिति प्रतीयते, न तु राज्यस्य कर्त्ता राजेति। अस्ति च प्राक् प्रसिद्धिः। द्रमिडा हि क्षत्रियजातावेव राजशब्दं प्रयुञ्जते। तेन बर्हिराज्याधिकरणन्यायेनैकदेशप्रसिद्धेरेवात्र निर्णयहेतुत्वमिति। तदुक्तं तत्रैव—

एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः।
तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना॥ इति।

(तं. वा., पृ. ३४३)

किञ्च राज्ञोऽपत्यं राजन्य इति तदपि स्मरन्ति। राजन्यशब्दश्च क्षत्रियजातावेव रूढः। तद्यदि राज्ययोगादेव राजा, तदा वर्णान्तरस्याप्यपत्यं राजन्यः स्यात्, न त्वेवम्। ततोऽपि क्षत्रिय एव राजेति। उच्यते—म्लेच्छा हि द्रमिडाः। म्लेच्छप्रसिद्धेश्चार्यप्रसिद्धिर्बलीयसीति यववराहाधिकरण एव दर्शितम्। आर्यप्रसिद्धश्चात्र राजशब्दस्य राज्यकर्तृत्वविषया प्रतीयते। एवं

स्मरन्ति—'न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः' इति । तथा 'न शूद्रराज्ये निवसेत्' इति च । बर्हिराज्यादिषु विपरीतप्रसिद्धिरस्ति । तेन बलवदार्यप्रसिद्धेश्चात्र राजशब्दस्य न जातिवचनत्वम् । यत्र राज्ञः कर्म राज्यमिति स्मरणम्, तद्राज्यशब्दस्य जनपरिपालने रूढस्यैव साधुत्वमात्रप्रतिपादनार्थम् । यथा आकृतिविशेषे रूढस्यैव गोशब्दस्य प्रतिपादानार्थं गच्छतीति गौरिति व्युत्पत्तिदर्शनम्, तथा राज्ञोऽपत्यं राजन्य इत्येतदपि राजन्यशब्दस्य क्षत्रियजातिवचनत्वेन रूढस्यैव साधुत्वमात्रप्रतिपादनार्थमेव स्मरणम् । अतो राज्ययोगनिमित्त एवायं राजशब्दः । तेन राजसूये त्रैवर्णिकस्यैवाधिकारात्, तदन्तर्गतायामवेष्टौ ब्राह्मणादीनां प्राप्तत्वात् "यदि ब्राह्मणो यजेत" इत्यादिश्रवणं निमित्तार्थमेवेति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि यौगिकोऽयं राजशब्दो भवेत् । किं तर्हि ? क्षत्रियजातिवचन एवायम्, द्रविडानां क्षत्रियजातिमात्रे प्रयोगात् । नन्वार्यप्रसिद्धिविरोधादप्रमाणं म्लेच्छप्रसिद्धिरित्युक्तम् । नैवम्; अनन्यथासिद्धत्वेनात्र म्लेच्छप्रसिद्धेरबाध्यत्वात् । न हि द्रविडानां क्षत्रियजातौ राजशब्दप्रयोगोऽभिधानशक्तिं विना प्रकारान्तरेणापि सम्भवति । आर्याणान्तु जात्यन्तरे प्रयोगः क्षत्रियधर्मकारितया गौणत्वेनैवोपपद्यते । क्षत्रियस्य मन्वा-

दिभिः जनपदपुरपरिपालनबलिषड्भागोद्धरणमभिषेचनञ्च विहितम्। अतस्तत्कारिणि वर्णान्तरेऽपि प्रयुज्यमानो गौण एवायं राजशब्दः। एवं सति राज्ञः कर्म राज्यम्, राज्ञोऽपत्यं राजन्य इति स्मृतिद्वयं निष्पन्नावगतावयवार्थपरित्यागेन साधुत्वमात्रप्रतिपादनार्थं भविष्यति। यत्तु 'न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः' इति 'न शूद्रराज्ये निवसेत्' इति च, तद्गौणराजशब्दार्थमभिप्रत्येति मन्तव्यम्। अतो राजशब्दस्य क्षत्रियवचनत्वाद्राजसूयान्तर्गतायामवेष्टौ ब्राह्मणादीनामप्राप्तेः न निमित्तार्थत्वम्। अतः पूर्वाधिकरणोक्तयदिशब्दपरित्यागादिना ब्राह्मणादिकर्तृकं प्रयोगान्तरमेवावेष्टेर्विधीयते।

ननु राजसूयप्रयोगवाक्यातिरिक्तमपरमप्यवेष्टेर्वर्णविशेषासम्बन्धवचनं श्रूयते—"एतयान्नाद्यकामं याजयेत्" इति। अत्र च वर्णत्रयस्यैव प्राप्तत्वाद्राजसूयप्रयोगे निमित्तार्थत्वासम्भवेऽप्यन्नाद्यप्रयोगे ब्राह्मणादीनां निमित्तार्थं श्रवणं भविष्यति। उच्यते—स्यादेवं यद्यन्नाद्यकामवाक्यं प्रयोगपरं भवति, किन्तु फलोपादानात् कर्मणः फले विनियोजकं सदनेकपरतागौरवभयादन्येन प्रयोगमपेक्षमाणं राजसूयप्रयोगमध्यस्थमेतच्छब्देनोपादाय 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' ( जै. सू., ४.३.५. ) इति न्यायेनान्नाद्यफले विनियुङ्क्ते। तेनास्याः साधारणं स्वाराज्यं फलम्,

असाधारणश्चान्नाद्यमिति । सा च निर्ज्ञातक्षत्रियकर्तृकेति निमित्तार्थं ब्राह्मणादिश्रवणमिति ।

ननु राजसूयवाक्ये स्वाराज्यफलविशेषितायामवेष्टौ राजा कर्त्तेत्यवगतः, न त्ववेष्टिमात्रे । अतः कथमन्नाद्यफलायां राजकर्त्तृत्वम् । नैवम्; न हि कर्त्ता फलेन सम्बध्यते, फलविशेषितेन वा कर्मणा, कारकाणां क्रियामात्राकाङ्क्षितत्वात् । तेन राजेति कर्त्तृपदस्य क्रियामात्राकाङ्क्षायां राजकर्त्तृकावेष्टिक्रियेत्येतावदवगतम् । अतो न स्वाराज्यप्रयोगे फलान्तरसम्बन्धविरोधः । भवतु वान्नाद्यवाक्यस्य प्रयोगपरत्वमपि, तथाप्येतयेति करणविभक्त्या यथाविज्ञानं सन्निहिताया एवावेष्टेरुपादानादिरापदवच्छाखान्तरीयप्रयोगवचनोपसंहृताङ्गत्वच्च राज्ञोऽपि कर्त्तृत्वेनोपादानान्न त्रैवर्णिकावकाशः । अतो न कथञ्चिदपि ब्राह्मणादियुक्तवाक्यान्निमित्तार्थत्वमिति पूर्वाधिकरणपूर्वपक्षन्यायेन यदिशब्दपरित्यागादिना अवेष्टेरेव ब्राह्मणादिकर्त्तृकं प्रयोगान्तरं विधीयत इति सिद्धम् । न च प्राप्ते कर्मणि कथं ब्राह्मणादिबार्हस्पत्याद्यनेकार्थविधानमिति वाच्यम् । विशिष्टकर्मविधिवद्विशिष्टप्रयोगविधाने चानेकविधानोपपत्तेः । तथा च सति राजसूयान्तर्गतापेक्षितप्रयोगस्य स्वाराज्यफलेनैव निराकाङ्क्षत्वाद्ब्राह्मणादियुक्तप्रयोगत्रयस्य फलसा-

काङ्क्षत्वात् "एतयाऽन्नाद्यकामं याजयेत्" इत्यन्नाद्यफलं ब्राह्मणादियुक्तप्रयोगत्रयेणैव सम्बद्ध्यते। तदुक्तम्—

क्रतुमध्यप्रयोगो हि स्वाराज्येनैव पूरितः।
साकाङ्क्षस्त्वितरस्तस्मात्तस्यैव फलसङ्गतिः॥ इति।

(तं. वा., पृ. ५८७)

प्रयोजनम्—पूर्वपक्षे राजसूयान्तर्गतावेष्टौ ब्राह्मणादिनिमित्तं बार्हस्पत्यादिमध्यविधानम्। सिद्धान्ते तु राजसूयप्रयोगाद्बहिरेव ब्राह्मणादिकर्त्तृकावेष्टिप्रयोगे बार्हस्पत्यादिमध्यविधानमिति।

सूत्रन्तु—अवेष्टौ ब्राह्मणादियुक्तावेष्टिवाक्ये यजेतेति यज्ञसंयोगात्, क्रतुप्राधानं ब्राह्मणादीनामभिधानं क्रियेत प्रयोगान्तरं विधातुमित्यर्थः॥

इति द्वितीयमवेष्ट्यधिकरणम्॥ २॥

अथ तृतीयमाधानाधिकरणम्

आधानेऽसर्वशेषत्वात्॥ २. ३. ४.॥

( विषयसंशयसङ्गतयः )

इदमामनन्ति "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः" इति। तत्र सन्दिह्यते—किं ब्राह्मणादिभिः कर्त्तव्यं निमित्तार्थम्, ब्राह्मणादयश्चेदादधाना वसन्तादिष्वादधीरन्निति ?

उत ब्राह्मणादीनामाधानं विधीयते ? इति । पूर्वाधिकरणे प्रासङ्गिकमवेष्टेः प्रयोगभेदं निरूप्येदानीं प्रस्तुत एव गुणनिबन्धनः कर्मभेदः प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—सर्वत्रोपपदश्रवणे सति उपपदार्थसंक्रान्तो विधिर्धात्वर्थानुवादमपेक्षत इति सिद्धम् । तदपि "वसन्ते ब्राह्मणोऽग्नीनादधीत" इति वसन्ताद्युपपदाक्षिप्तशक्तिविधायकमाधानानुवादमपेक्षते । न चाधानमप्राप्तम्, अग्निहोत्रादिश्रुतिभिरेवाक्षेपतः प्राप्तत्वात् । तथाहि—आहवनीयसाध्याः खल्वग्निहोत्रादयः "यदाहवनीये जुहोति" इति श्रुतेः "आहिताग्निराहवनीयः" इत्यर्थवादवशादाहवनीयश्चाधानसाध्य इत्याक्षेपादस्त्येवाधनप्राप्तिः । अथवा "य एवं विद्वानग्निमाधत्ते" इत्येतस्मादेवानन्याक्षिप्तशक्तिविधायकादाधानस्य प्राप्तत्वात्तदनुवादेन वसन्तादिकालविधानाय निमित्तार्थं ब्राह्मणादिश्रवणमिति । न चायं वर्त्तमानापदेशत्वान्न विधिः । "य एवं सपत्नं भ्रातृव्यमवर्त्ति सहते, य एवं विद्वानग्निमाधत्ते" इत्यर्थवादसम्बन्धाद्विधित्वसिद्धेः । तदुक्तम्—

सामर्थ्याक्षिप्तमाधानं सामान्यवचनेन वा ।
तस्माद्वर्णविशेषाणां निमित्तार्था पुनः श्रुतिः ॥ इति ।

( तं. वा., पृ. ५८८ )

नन्वाधानविशिष्टो ब्राह्मणो ब्राह्मणविशिष्टं वाधानमत्र निमित्तम् । उभयथापि च विशिष्टानुवादे वाक्यभेदः । उच्यते—अप्राप्तवसन्तविधौ प्राप्तत्वाद्ब्राह्मणाधानयोरनुवादः । तत्रापि विशेषणतात्पर्यात् कारकस्य च क्रियाविशेषणत्वाद्ब्राह्मणस्यैव निमित्तत्वान्न वाक्यभेदः । न च निमित्तकालयोर्द्वयोरप्युद्देश्यत्वेन कथमेकस्मिन् वाक्ये समावेश इति वाच्यम् । कालस्य क्रियान्वयित्वान्निमित्तस्य च कर्त्तव्यत्वाद्वैलक्षण्येन समावेशोपपत्तेः । तेन यद्याद्युपबन्धव्यतिरेकेणाधानसम्बन्धेन ब्राह्मणाद्यनुवादार्थवादत्वात् ब्राह्मणादिनिमित्तक आधाने वसन्तकालविधानमिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि यथाश्रुतस्याधानस्याक्षेपतः प्राप्तिर्भवेत् । अत्र हि "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यात्मनेपदात् कर्त्तृगामिफलमाधानं प्रतीयते । फलञ्चाधानस्याहवनीयः । तेनानुवादपक्ष एवायं वाक्यार्थः—कर्त्तृगताहवनीयफलमाधानं ब्राह्मणेन वसन्ते कर्त्तव्यम् । न चाग्निहोत्रादिश्रुतिभिरेवाक्षेपादेवंविधमाधानं लभ्यते, यदनूद्येत । आहवनीयो हि तैराक्षिप्यते, न त्वाधानानुष्ठानम् । एकेनाहितस्यान्यैः क्रयणादिनाप्युपादानसम्भवात् । न चानुवादगतविशेषदर्शनात्तथाभूतस्यैवाक्षेप इति वाच्यम् । सन्देहे सत्यनुवाददर्शनादपि निर्णयो भवति । यथा

"ऐरं कृत्वोद्गेयम्" इत्यत्रैरापदस्य कस्मिन् स्थाने निवेश इति सन्देहे "न गिरा गिरा" इति निषेधानुवाददर्शनादिरापदस्य गिरापदस्थाननिवेशो निर्णीतः। इह तु "आहवनीये जुहोति" इति विनियोगबलादाहवनीयमन्तरेण क्रतुविध्यसम्भवात् भवत्वाहवनीयोपादानाक्षेपः। स च स्वतः प्राप्त्यभावाद्वसन्तादिविशिष्टाधानमेव।

ननु मा भूत्क्रतुश्रुत्याक्षिप्तस्यानुवादः। "य एवं विद्वानग्निमाधत्ते" इति प्रत्यक्षमेव वचनं विधायकमस्त्यात्मनेपदयुक्तम्। तत्र कर्तृगामिफलस्यैवाधानस्य प्राप्तत्वात्तदनुवादेन वसन्तादियुक्तवाक्येषु ब्राह्मणादिनिमित्तं वसन्तादिकालमात्रं विधास्यते। नैवम्; स्यादेवं यदि "य एवं विद्वानग्निमाधत्ते" इति विधिर्भवेत्। किन्तर्हि? आधानाङ्गभूतोपसर्जनादिसम्भारविध्येकवाक्यतया वर्त्तमानापदेशरूपः कृत्स्न एवायमर्थवादः। एवं हि श्रूयते— "स एवं सपत्नं भ्रातृव्यमवर्त्ति सहते, य एवं विद्वानग्निमाधत्ते अप उपसृजति" इति। किञ्चादधीतेत्यसन्दिग्धः प्रत्यक्षोऽत्र विधिः श्रूयते। तथा सत्यग्निहोत्रादिश्रुतेराक्षेपो वर्त्तमानापदेशस्य विधित्वकल्पनं वा न सम्भवति। तदुक्तम्—

प्रत्यक्षविधिसद्भावे लक्ष्यते नानुमानिकः।
प्रापकत्वमतो नार्थवर्त्तमानापदेशयोः॥ इति।

(तं. वा., पृ. ५८६)

अतः सर्वथा प्राप्त्यभावान्न वसन्तादिवाक्येषु ब्राह्मणादीनां निमित्तार्थं श्रवणम्, किन्तु कर्तृकालानेकगुणसम्बद्धानि भिन्नान्येवाधानानि विधीयन्ते। ननु अपशूद्राधिकरण एवाधानाक्षेपो "य एवं विद्वानग्निमाधत्ते" इत्यस्य विधित्वं ब्राह्मणादियुक्तवाक्यानाञ्च निमित्तार्थत्वमिति सर्वमुपन्यस्यते। अतः कथमत्रास्य विचारः? इति। उच्यते—तत्र हि प्रधानभूतकर्मणि कमिश्रुतेर्वर्णचतुष्टयसाधारणत्वात्तद्बलेन शूद्राधिकारे सति तदुपपत्त्यर्थं कमिश्रुतिभिरेव वर्णचतुष्टयसम्बन्धेनैवाधानस्याक्षेपो भविष्यति। "अग्निमाधत्त" इत्यस्य वर्णचतुष्टयसाधारणाधानविधायकत्वं वसन्तादिवाक्यैश्च त्रैवर्णिकस्यैव कालविशेषविधानाच्छूद्रस्यानियतकालीनमेवाधानमिति शूद्रस्याप्याहिताग्नेरधिकारपूर्वपक्षे सिद्धान्तितम्—कमिश्रुतेस्त्रैवर्णिकपरत्वेऽप्यविरोधान्नैतदधिकरणसिद्धवसन्तादिवाक्यानां विशिष्टाधानाक्षेपेण शूद्राधिकारः सम्भवति। तेन कमिश्रुतेर्वर्णचतुष्टयाधिकारपरत्वेन समधिकशूद्राधिकारशङ्कानिरासार्थं तदधिकरणम्। तत्सिद्धं चैतदधिकरणसिद्धमेव सर्वं स्मारितमित्यपौनरुक्त्यम्।

प्रयोजनम्—पूर्वपक्षे आहितस्याप्यग्नेः क्रयणादिलक्षणस्य कर्माङ्गत्वम्। सिद्धान्ते त्वाधानोत्पन्नस्यैव कर्माङ्गत्वम्।

सूत्रन्तु—आधानेऽपि पूर्ववदेव प्रापणवचनानि न निमित्तार्थानि

आधानस्यासर्वशेषत्वात् आहवनीयवत् कर्मशेषत्वाभावेनाक्षेपाभावादित्यर्थः। द्वितीयवर्णके तु सर्वशेषत्वादिति। तत्रैषा व्याख्या—अनुपसर्जनादिसर्वसम्भारशेषत्वादित्यर्थः ॥

इति तृतीयमाधानाधिकरणम् ॥ ३ ॥

अथ चतुर्थं दाक्षायणयज्ञाधिकरणम्

अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥२. ३. ५॥

( विषयसंशयसङ्गतयः )

दर्शपूर्णमासौ प्रकृत्यामनन्ति—"दाक्षायणयज्ञेन यजेत प्रजाकामः, साकंप्रस्थायीयेन यजेत पशुकामः, सङ्क्रमयज्ञेन यजेतान्नाद्यकामः" इति। तत्र सन्देहः—किं दर्शपूर्णमासयोरेव गुणात् फलम्? उत कर्मान्तरमेवञ्जातीयकम्? इति। कर्मभेदापवादभूता गुणस्य निमित्तार्थता कुत्रास्ति कुत्र नास्तीति निरूप्य इदानीं फलार्थतापि गुणस्य कर्मभेदापवादभूतदध्नेन्द्रियाधिकरणप्रतिपादिताप्यधिकाशङ्कानिरासार्थं पुनः प्रतिपाद्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—गुणाकृष्टो हि विधिः कर्मपरित्यागेन गुणमेव फले विधत्ते। यथा—"दध्नेन्द्रियकामस्य जुहुयात्"

इत्यादौ । न चेह दध्यादिवत् पृथक्सिद्धो गुणः कश्चित् प्रतीयते । दाक्षायणयज्ञसाकम्प्रस्थायीयसङ्क्रमयज्ञशब्दानां क्वचिद्गुणविशेषे प्रसिद्ध्यभावात् । तेन 'प्रसिद्धेनाप्रसिद्धस्य नित्यमिष्टं विशेषणम्' इत्यनेन न्यायेन विश्वजिदादिपदवद्यागनामधेयत्वमेवामीषाम् । तथाच सत्यविधेयत्वाम्नास्तदवच्छिन्नं कर्मैव फले विधीयत इति संज्ञात एव कर्मभेदः । ननु संज्ञाधिकरणे पृथक्श्रुता हि संज्ञा "अथैष ज्योतिः" इत्यादिः पश्चाद्यजतिना सम्बध्यमाना भेदिकेत्युक्तम् । यजिसमभिव्याहृता तु संज्ञा न भेदिकेत्यभ्यासाधिकरण एव निरूपितम् । अतः कथमत्र "दाक्षायणयज्ञेन यजेत" इत्यादिका यजिसमभिव्याहृता संज्ञा भेदिकेति । उच्यते—अनन्यपराख्यातसमभिव्याहृता हि संज्ञा सत्यं न भेदिका, आख्यातस्यैवानन्यपरत्वेन तत्र भेदकत्वात् । इह त्वाख्यातस्य फलसम्बन्धपरत्वेन प्रकृतकर्मप्रवेशसम्भवात् संज्ञैव संज्ञान्तरावरुद्धे कर्मणि प्रवेशमलभमाना कर्मभेदिकेति । एतच्चैतदधिकरणपूर्वपक्षसिद्धमेव तत्र प्रतिपादितमित्यवधातव्यम् । तेनायनेषु दाक्षायणयज्ञादिषु चोदनान्तरं कर्मान्तरमेव ज्योतिष्टोमविकारभूतं फले विधीयते, न तु गुणात् फलमिति । एवं प्राप्तेऽभिधीयते—

विकारो वा प्रकरणात् ॥२.३.८॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि दध्नेन्द्रियवद्गुणाङ्क्रान्तो विधिर्न भवेत् । तथाहि–प्रत्येकं तावदग्निहोत्रवद्दर्शपूर्णमासाख्यं कर्म प्रत्यभिज्ञायते । गुणश्च यद्यपि दध्यादिवल्लोकप्रसिद्धो न प्रतीयते, तथापि वाक्यान्तरेणानुष्ठानावृत्तिविशेषसान्नाय्यपात्रसहितप्रस्थानहोमदेशसंक्रमणलक्षणगुणा दर्शपूर्णमाससन्निधौ विहिताः सन्ति । शक्यते च यौगिकत्वादेतैः शब्दैस्तेषामुपादानम् । तथाहि–पौनःपुन्यानुष्ठानोत्साहशाली यजमानो दक्षः । तस्यर्त्विजो दाक्षाः तेषामयनमनुष्ठानमावृत्तिरूपं दाक्षयणमुच्यते । एवं सह सन्नाय्यकुम्भीभ्यां प्रस्थानं साकम्प्रस्थानमुच्यते । तथाऽऽहवनीयदेशे सङ्क्रमणं सङ्क्रम उच्यते । तेन यथा वाक्यान्तरेणोक्थ्यशब्दवाच्ये संस्थाविशेषे दर्शिते तत्सन्निधौ "पशुकाम उक्थ्यं गृह्णीयात्" इति लोकाप्रसिद्धस्याप्युक्थ्यपदार्थस्य फले विधानम्, एवमत्रापीति नानुपपन्नम् । ननु नात्र दध्नेतिवद्दाक्षायणेनेति श्रूयते । किं तर्हि ? दाक्षयणायज्ञेनेति । तेन कर्मण एव साधनत्वावगमात् कथं गुणस्य फले साधनत्वम् ? उच्यते—यद्यप्येवम्, तथापि विशेष्यस्य विनियोगायोग्यत्वाल्लोहितोष्णीषादिवद्विशेषणप्रधानान्येव तानि वचनानि ।

तेषामेव फलसम्बन्धं प्रतिपादयन्ति । तथाहि—न तावत् प्रकृतं कर्म फले विनियुज्यते । "सर्वेभ्यो वै दर्शपूर्णमासौ" इत्यनेनैव तत्तत्फलान्वयस्य प्राप्तत्वात्, संज्ञान्तरवैयर्थ्याच्च । नापि कर्मान्तरम्, प्रकृतप्रत्यभिज्ञानविरोधात्, विशिष्टविधिगौरवप्रसङ्गाच्च । तेन कर्मणो विनियोगासम्भवाद्विशेषणमेव गुणः फले विधीयते । न चैषामसाधनत्वात् प्रकृतकर्माश्रयत्वानुपपत्तिः । यतः सहप्रस्थानसंक्रमणयोस्तावत्कर्मसाधनत्वं व्यक्तमेव । अनुष्ठानावृत्तेरपि पुरुषप्रयत्नधर्म्मत्वादावृत्तस्य च प्रयत्नस्यावृत्तकर्मसाधनत्वाद्युक्तं कर्मणो गुणाश्रयत्वम् ।

ननु लोके तावदेते गुणा दध्यादिवन्न प्रतीयन्ते । नापि वेदे दाक्षायणादिगुणप्रतिपादकानि वचनानि श्रूयन्ते । अतः कुत्र प्रसिद्धस्य फले विधानमिति । उच्यते—साकं प्रस्थाय्ये तावत् "आज्यभागाभ्यां प्रचार्याग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाह" इति वचनं सहप्रस्थानलक्षणगुणबोधकं भाष्यकारेणोदाहृतम् । तद्गोचरत्वेनैव न्यायव्युत्पत्तौ सत्यामुदाहरणान्तरेऽपि यदि दृश्यते, तदा कल्पनीयम् । अतो गुणफलसम्बन्ध एवायमिति न किञ्चिदनुपपन्नम् ।

प्रयोजनम्—पूर्वपक्षे दर्शपूर्णमासपृथग्भूतं ज्योतिष्टोमधर्मकं कर्मान्तरमेवानुष्ठेयम् । सिद्धान्ते तु नेति ।

सूत्रन्तु—विकारो वा दर्शपूर्णमासयोरेवावृत्त्याद्यवस्थाभेदः फले विधीयते । प्रकरणात्प्रकरणानुग्रहादित्यर्थः ॥

इति चतुर्थं दाक्षायणयज्ञाधिकरणम् ॥ ४ ॥

अथ पञ्चममीषालम्भाधिकरणम्

संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ॥ २. ३. १२. ॥

( विषयसंशयसङ्गतयः )

अनारभ्याधीयते किञ्चित् "वायव्यं श्वेतमालभेत भूतिकामः" "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इति । दर्शपूर्णमासयोरप्यामनन्ति—"ईषामालभेत, चतुरो मुष्टीन्निर्वपति" इति । तत्रायमर्थः सांशयिकः—किं दार्शपूर्णमासिक आलम्भे आलम्भो गुणविधिः, दार्शपूर्णमासिके निर्वापे निर्वापो गुणविधिः ? उत न प्रकृतिमपेक्षते, इतरश्चेतरश्चेति । यदा न प्रकृतिमपेक्षते, तदापि किं यावदुक्ते ? उत यजिमती एते कर्मणी ? इति । निमित्तार्थस्य फलार्थस्य च गुणस्य न कर्मभेदकत्वमिति प्रतिपाद्येदानीमेतदुभयरूपरहितस्य गुणस्य भेदकत्वं पूर्वापवादेन प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्र द्विधा पूर्वपक्षः। आद्यस्तावत् "श्वेतमालभेत, चरुं निर्वपति" इति श्वेतरूपचरुरूपगुणाकृष्टो विधिः कर्मानुवादमपेक्षते । तत्र

यद्यपि प्रकृतं कर्म नास्ति, तथाप्यनारभ्याधीतानां प्रकृतिगामित्वात् प्रकृतौ च दार्शपूर्णमासिके शकटे ईषालम्भचतुर्मुष्टिनिर्वापयोर्विहितत्वादुपादेयस्य चरुगुणस्य दूरस्थकर्मानुवादेनापि विधातुं शक्यत्वात् प्राकृतालम्भनिर्वापानुवादेनैव श्वेतरूपचरुरूपगुणौ विधीयेते । तेनायमर्थः—दार्शपूर्णमासिकी शकटेषा श्वेतीकृत्यालब्धव्या । चतुर्मुष्टिभिर्निर्वापश्चरोः कर्त्तव्यः । चरुशब्दश्चात्र लोकप्रसिध्या वा लक्षणया वा स्थालीवाचकः । न च फलपदश्रवणाद्विधीयमानो गुणः फल एव विधीयतामिति वाच्यम्, प्रकृताश्रयाभावात् । अनेनैव च वाक्येन फलसम्बन्धकरणे आश्रयसम्बन्धकरणे च वाक्यभेदप्रसङ्गात् । तेन "सर्वेभ्यो दर्शपूर्णमासौ" इति प्रधानफलस्यैवाङ्गसम्बन्धेनानुवादः । तथाच सर्ववनस्पतीनामर्थवादतो वायुदेवताकत्वादीषाया एव वायव्यमित्यनुवादः । तथा चाग्नेयपुरोडाशप्रकृतिभूतानां चतुर्मुष्टिव्रीहीणां तेजोमयदेवतात्वात् सौर्यमिति गौणोऽयमित्यप्यनुवादः । तस्मादप्रकरणे अनारभ्य श्रूयमाण आलम्भनिर्वापादिः संस्कारो गुणविधानार्थः स्यादविद्यमानशब्दयोगत्वादिति प्रथमः पूर्वपक्षः ।

अत्रापरितोषाद्द्वितीयः पूर्वपक्षो गृह्यते—

यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ॥ २. ३. १३ ॥

अयमत्र पूर्वपक्षिणोऽभिसन्धिः—यदि हि दार्शपूर्णमासिकाल-

म्भनिर्वापावनूद्य श्वेतचरुरूपौ गुणौ विधीयेयातां, ततो भूतिकामो ब्रह्मवर्चसकाम इति फलपदानुवादोऽनर्थकः स्यात् । न च पक्षप्राप्तस्य नित्यवदनुवादोऽपि सङ्गच्छते । न चैतत्फलपदमालम्भनिर्वापविशेषणम् । भूतिकामस्य य आलम्भो ब्रह्मवर्चसकामस्य यो निर्वापस्तौ च श्वेतचरुरूपौ गुणौ कर्त्तव्याविति वाच्यम् । तथा च सति विशिष्टानुवादाद्वाक्यभेदप्रसङ्गात् । तेनालम्भनिर्वापावेव गुणफलविशिष्टौ विधीयेते । वायुसूर्ययोस्तु देवतात्वेनालम्भनिर्वापयोरेवानन्वयः । तेनायमर्थः—यावत् किञ्चिच्छ्वेतं द्रव्यं तद्वायुमुद्दिश्यालब्धव्यम् । चरुद्रव्यञ्च सूर्यमुद्दिश्य निर्वापयितव्यम् । यत्तु याग एव परं देवता तेनान्वीयत इति तत्र तत्रोच्यते तदेतदधिकरणसिद्धान्तसिद्धमेवेति न विरोधः । अतो यावदुक्तालम्भनिर्वापकर्मचोदनैवेयं श्रुतिमूलत्वात् शब्दप्रमाणकत्वादिति । एवं प्राप्तेऽभिधीयते—

यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ॥ २. ३. १४ ॥

( सिद्धान्तः )

अयभिप्रायः—भवेदेवं यदि प्रतीयामानो द्रव्यदेवतान्वयो यागभावनाविधिं विनोपपद्येत । तथाहि—सर्वत्र विधेर्विशेषणपरत्वाद्विधिरयं वायव्यपदार्थे देवतावति द्रव्ये सङ्क्रान्तोऽवगम्यते । न च त्यज्यमानं हविः प्रत्युद्दिश्यमानाया देवतायाः प्राक्सिद्धि-

रस्ति । तत्र द्रव्यविशेषणभूता देवता प्राप्त्यभावादशक्यानुवादा । साप्यवश्यं विधेया । न चोभयविधानमन्तरेण तत् सम्भवति । न चालम्भनिर्वापभावनाविधौ देवताविधिरुपपद्यते, यागैकक्रियान्वयित्वाद्देवतायाः । तेन द्रव्यदेवतावाचिपदसङ्क्रान्तोऽयं विधिर्यागभावनामन्तरेणापर्यवस्यन् कल्पितशब्दवायव्ययागावच्छिन्नामेव भावनां द्रव्यदेवताविशिष्टां विधाय पर्यवस्यतीति विशिष्टयागभावनाविधिरेवायम् । तदुक्तम्—

यथा फलपदं प्रेक्ष्य गुणपक्षो निराकृतः ।
देवतापदमालोच्य तथैवालम्भमात्रता ॥ इति ।

(तं. वा., पृ. ६००)

ननु कथं तर्ह्यैन्द्रवायववादिवाक्येषु द्रव्यदेवताविशिष्टग्रहणविधानम्? मैवम्; न हीदं ग्रहणमर्थान्तरभूतम्, किं तर्हि? यागावयवभूतमेवैतत् । न हि देवतोद्देशेनागृहीतं देवतोद्देशेन त्यज्यते । न चान्योद्देशेन त्यागे यागः सम्पद्यते । तेन देवतोद्देशेनैव गृहीतस्य हविषस्त्यागो याग इति न यागावयवभूते ग्रहणे देवतोद्देशो विरुध्यते । एवञ्च यागापेक्षायां "सोमेन यजेत" इत्येवमेव प्रत्यक्षश्रुतो यागोऽस्तीति न यागकल्पनावकाश इति । एतच्च पशुसोमाधिकरण एव दर्शितम् । न चात्रालम्भनिर्वापौ यागैकदेशौ । नापि सान्निधिश्रुतोऽत्र यागः समस्तीति वैषम्यम् ।

न च "आग्नेयं चतुर्द्धा करोति" इतिवद्यागद्वारेणैवान्यतः सिद्धदेवतान्वयस्यालम्भमात्रं निर्वापमात्रं च विधीयत इति वाच्यम् । यतो द्रव्यसंस्कारे विधीयमाने देवताभावस्यानपेक्षितत्वादन्यतः सिद्धदेवतासम्बन्धस्यापि भवेद्द्रव्योपलक्षणत्वम् । इह तु कर्माङ्गभूतत्वेन देवताया विधीयमानत्वान्नोपलक्षणत्वम् । किं तर्हि ? अनुष्ठेयत्वमेव । न च यागं विना देवतानुष्ठानं सम्भवतीति सिद्धं यागभावनाविधानम् । आलम्भनिर्वापौ तु प्रकृतिप्राप्तौ प्रत्ययसाधुत्वार्थमनूद्येते इति सिद्धम् ।

प्रयोजनम्—पूर्वपक्षे आलम्भमात्रानुष्ठानम् । सिद्धान्ते यागानुष्ठानमिति ।

सूत्रन्तु—आलम्भवाक्ये च यजतिः यागो विधीयते । द्रव्यफलभोक्तृसंयोगात् द्रव्यफलदेवतासम्बन्धात् यागकर्मणैव तेषां सम्बन्धादित्यर्थः ॥

इति पञ्चममीषालम्भाधिकरणम् ॥ ५ ॥

## अथ षष्ठं वत्सालम्भाधिकरणम्

### विशये प्रायदर्शनात् ॥ २. ३. १६ ॥

( विषयसंशयसङ्गतयः )

अथात्र भगवानाचार्य इदमुदाहृत्य "वत्समालभेत वत्सनिकान्ता हि पशवः" इति इमं संशयमुपन्यस्यति स्म—किं यजतिमदभिधान एवालभतिः? उतालम्भमात्रवचनः? इति। आलम्भनिर्वापवाक्ययोर्द्रव्यदेवतासम्बन्धभेदानुमितयागभेदं प्रतिपाद्येदानीं प्रसङ्गेन देवतासम्बन्धप्रत्युदाहरणे प्रतिपादयितव्ये प्रथमं स्पष्टत्वादालम्भे प्रतिपाद्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—अग्निहोत्रं प्रकृत्य दोहविधिमाम्नाय "वत्समालभेत वत्सनिकान्ता हि पशवः" इति श्रूयते। तेन नात्र प्रकृतिभूतदैक्षपश्वालम्भानुवादेन वत्सस्पर्शविधानमात्रं शङ्कनीयम्। आरभ्याधीतत्वेन प्रकरणबाधाभिप्रायप्रकृतिगामित्वासम्भवात्। संस्कार्यत्वेन श्रूयमाणस्य विनियोगभङ्गं विना कर्मानुवादे विधानासम्भवाच्च यागविधिरेवायमिति हैतुकः प्रत्यवतिष्ठते। तथाहि—"वत्समालभेत" इत्यत्रालभतिधातुर्यागावबोधार्थः, वैदिकप्राणिकर्मालम्भक्रियाविषयत्वात्। एवंविधः स

यागावबोधार्थो यथा वायव्यवाक्यस्थालभतिधातुरिति । अत्र वैदिकग्रहणं 'कान्तामालभेत' इति व्यवच्छेत्तुम् । प्राणिकर्मक्रियाविषयत्वग्रहणम् "ईषामालभेत" इति व्यवच्छेत्तुम् । न चायमसिद्धः, विशेषणविशेष्यविशिष्टानां पक्षधर्मतायाः प्रमाणसिद्धत्वात् । नापि विरुद्धः, साध्यविपरीतव्याप्त्यभावात् । नापि साधारणानैकान्तिकः, विपक्षवृत्त्यभावात् । नाप्यसाधारणः, साधर्म्यदृष्टान्तसम्भवात् । यागान्तरविधिर्वेति द्वेधा पूर्वपक्षसम्भवः । तत्र पूर्वस्मिन् कल्पे प्रकरणाधीतमन्त्रप्राप्तच्छागबाधप्रसङ्गात् विकल्पस्य चाष्टदोषदुष्टस्यान्याय्यत्वात् मन्त्रस्य चान्यार्थत्वप्रसङ्गात् यागान्तरविधिरेवायं तस्य च देवताप्राप्तिरतिदेशात् । प्रकरणादग्निहोत्राङ्गत्वेन पृथक्फलकल्पना । तस्मात् पूर्वाधिकरणवत् कल्पितयजिपदेन यागविधानमेवेति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि पूर्वाधिकरणवदालभतौ यजिः कल्पयितुं शक्यते । तत्र हि विधेयार्थदेवतापदानुरोधेन यजिः कल्पितः । न चात्र तथाभूतं देवतापदमस्ति । किञ्च यागविधिपक्षे वत्सस्य यागसाधनत्वाद्विनियोगभङ्गेन वत्सेन यागं कुर्यादिति वाक्यार्थो वर्णनीयः । तथा च सत्यग्निहोत्रहोमीयदोहोपयोगितया प्रयोजनवतो वत्सस्य द्वितीयाश्रुत्यवगतं संस्कार्यत्वं बाध्येत, ईदृशश्चा-

पेक्षितं धेनुप्रस्नवनं हीयते। अतोऽनुमानमप्येतदागमबाधितविषयं नात्मानमेव लब्धुमलम्। आलम्भभावनं च नालभतौ यागानुमापकम्, देवतासम्बन्धस्यैव यजत्यव्यभिचारात्। तस्मिन्नव्यभिचरितसम्बन्धे सति हिंसात्ववदप्रयोजकश्चायं हेतुरिति।

किञ्च "वत्सनिकान्ता हि पशवः" इति वाक्यशेषश्च श्रूयते। अयञ्च हेतुवन्निगदार्थवादो वत्सप्रीत्यर्थः स्पर्शनं विधातुमुपपद्येत। मारणार्थालम्भपक्षे तु वत्सप्रियत्वं पशूनामुच्यमानमसम्बद्धमेव स्यादिति। तेन यावदुक्तालम्भविधिरेवेति सिद्धम्।

प्रयोजनम्—पूर्वपक्षे वत्ससाधनकयागानुष्ठानम्। सिद्धान्ते तु वत्ससंस्कारालम्भमात्रानुष्ठानम्।

सूत्रन्तु—पूर्वाधिकरणोक्तयागानुमानहेतोर्दैवतासम्बन्धस्याभावेन 'यावदुक्तं वा कर्मणः श्रुतिमूलत्वात्' इत्यनेनैव पूर्वपक्षसूत्रेण सिद्धान्तसिद्धेः लिङ्गदर्शनमात्रपरं "वत्समालभेत" इति किं यागविधिः? उत वत्ससंस्कारालम्भविधिः? इति संशये प्रायदर्शनात्संस्कारत्वनिश्चयः, प्रायदर्शनञ्चात्र बहुप्रदेशाम्नानम्। यथाग्र्यप्राये लिखितोऽग्र्य इति॥

इति षष्ठं वत्सालम्भाधिकरणम्॥ ६॥

## अथ सप्तमं चरूपधानाधिकरणम्

### संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥२.३.१८॥

(विषयसंशयसङ्गतयः)

अस्त्यग्निः। तत्र "नैवारश्चरुर्भवति" इत्युक्त्वा "य एनं चरुमुपदधाति" इति श्रूयते। तत्र सन्दिह्यते—किं चरुर्यागार्थो यागं कृत्वावशिष्टमुपधातव्यम्? अथोपधानार्थ एव? इति। पूर्वमालम्भप्रत्युदाहरणं प्रतिपाद्य प्रसङ्गादिदानीं निर्वापप्रत्युदाहरणं वक्तव्यम्। यद्यप्यत्र निर्वापो न श्रूयते, तथापि चतुर्मुष्टिनिर्वापस्य चरावावश्यकत्वात् अधिकदेवतासम्बन्धतायाश्चरुगोचरत्वात् यदि चरुर्यागार्थस्तदा तद्द्वारेण निर्वापोऽपि यागार्थ इति चरुद्वारेण निर्वापप्रत्युदाहरणं प्रतिपाद्यते।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यद्यप्यग्न्याधानार्थेष्टकास्थण्डिलवन्तं क्रतुं प्रकृत्य श्रूयते "नैवारश्चरुर्भवति बृहस्पतेर्वा एतदन्नं यन्नीवारा य एतं चरुमुपदधाति" इति, तथापि "नैवारश्चरुर्भवति" इत्यत्र चरोः स्वयं भवनासम्भवान्नैवारं चरुं भावयेदिति वाक्यार्थो व्यञ्जनीयः। तत्र च किमर्थमिति प्रयोजनापेक्षायां नोपाधानार्थत्वम्,

"चरुमुपदधाति" इति द्वितीयाश्रुत्योपाधानस्यैव चर्वर्थत्वावगमात् । नापीष्टकास्थलनिष्पत्यर्थत्वम्, अदृष्टार्थत्वापत्तेः । नापि सन्निधानात् प्रकृतयागार्थत्वम्, तस्य द्रव्यान्तरावरुद्धत्वेनास्यानवकाशात् । तेन "बृहस्पतेर्वा एतदन्नं यन्नीवाराः" इत्यर्थवादे नीवारद्वारेण चरुसम्बन्धितामात्रे श्रुतेऽपि बृहस्पतिः सम्बन्धान्तराभावाद्देवतात्वेन सम्बध्यते। न च तद्धितचतुर्थीमन्त्रवर्णैरेव देवता प्रतिपाद्यत इति नियमोऽस्ति । तदभावेऽप्यपेक्षावशात् फलमिव रात्रिसत्रे देवताप्यत्रार्थवादाद्भविष्यति । किञ्च शाखान्तरार्थवादे चरुसमानाधिकरणे तद्धितश्रुतिरेवास्ति—"बार्हस्पत्यो भवति" इति । तेनायमर्थः—बार्हस्पत्यं नैवारं चरुं भावयेदिति । न चायमर्थो यागं विनोपपद्यत इति कल्पितयजिपदोपनीतो याग एव द्रव्यदेवताविशिष्टो विधीयते । तथा सति यागावशिष्टचरुप्रतिपत्तिकर्मैव चरूपधानम् । एवं सति विनियोगभङ्गोऽपि न भविष्यतीति चरुद्वारेण निर्वापोऽत्र यागार्थ एवेति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि चरौ बृहस्पतिर्देवतात्वेन सम्बध्येत । तथाहि—"बृहस्पतेर्वा एतदन्नं यन्नीवाराः" इत्यर्थवादान्नीवाराणां बृहस्पतिसम्बन्धोऽवगम्यते, न चरोः । नापि विध्युद्देशे बृहस्पतिः श्रूयते । न च देवताप्रतिपादकतद्धितचतुर्थी-

मन्त्रवर्णानामन्यतमः शब्दोऽत्र विद्यते । त्रेधाप्यसङ्कोचितोऽयं देवतान्वयश्चरोः विनैव कारणं कल्पनीयः । तदुक्तम्—

त्रेधा च देवतायोगश्चरोरस्यानुमानिकः ।
नीवारस्यार्थवादस्थतद्धितादिविवर्जनात् ॥ इति ।

(तं. वा., पृ. ६०५)

न च नैवारं चरुं भावयेत् किमर्थमित्यपेक्षायामितरासम्भवेन यागार्थत्वे यागसिध्यर्थमेव देवताकाङ्क्षासद्भावाद्यथाकथञ्चिदर्थवादप्रतीतस्यापि देवतात्वेनान्वय इति वाच्यम् । अर्थकर्मत्वेऽप्युपधानस्य चरुमिति द्वितीयोपपत्तेः । उपधानं खल्वत्रेष्टकासन्धिपूरणाय चरुनिधानम् । तच्चेष्टकासंयोगादाद्यप्रयोजनवतश्चरोः स्थलदेशप्राप्तिरूपसंस्कारेणैव स्थण्डिलनिर्माणार्थमिति न द्वितीयानुपपत्तिः । न चैवं सत्युपधानस्य चरुसंस्कारत्वमेवेति नार्थकर्मत्वम् । स्थलनिर्माणार्थोपधानार्थत्वव्यतिरेकेण प्रयोजनान्तरानवगमात् । तेन यथार्थज्ञानार्थस्यैवाध्ययनस्यार्थात्तिप्तश्चरुसंस्कारोऽनूद्यते । एवं च सति "बार्हस्पत्यो वा भवति" इति शाखान्तरीयार्थवादगततद्धितश्रुतिरपि विध्युद्देशावगतोपधानार्थत्वेन चरोर्देवताविधानाच्च (?) किन्तु "बृहस्पतेर्वा एतदन्नं यन्नीवारा" इति शाखान्तरीयार्थवादस्य नीवारद्वारेण चरुस्तुत्यर्थत्वादस्यापि नीवारद्वारेण चरुस्तुत्यर्थत्वमेवेति । तेन यावदुक्तं चरुविधिरेवायमिति न चरुद्वारेण नीवापस्य यागीयत्वम् ।

प्रयोजनम्—पूर्वपक्षे चरुद्रव्यकबृहस्पतिदेवताकयागानुष्ठानम्। सिद्धान्ते तूपधानार्थं चरुरेव कर्त्तव्य इति।

सूत्रन्तु—संयुक्तश्चरुरर्थशब्देन उपदधातीति प्रयोजनशब्देन तदर्थः उपधानार्थः, एवं श्रुतिसंयोगदित्यर्थः॥

इति सप्तमं चरूपधानाधिकरणम्॥ ७॥

## अथाष्टमं पात्नीवताधिकरणम्

### पात्नीवते तु पूर्वत्वादवच्छेदः॥ २. २. १६॥

( विषयसंशयसङ्गतयः )

त्वाष्ट्रं पात्नीवतं विधायाह—"पर्यग्निकृतं पात्नीवतमुत्सृजति" इति। तत्र सन्देहः—किं त्वाष्ट्रस्य पर्यग्निकृतस्यैष उत्सर्गो विधीयते? उत तस्माद्यागान्तरम्? इति। आलम्भनिर्वापयोः प्रत्युदाहरणत्वेन यजिमदभिधानं निराकृत्येदानीं प्रकृतोदाहरणेऽपि यजिमदभिधानं निराक्रियते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यद्यपि "त्वाष्ट्रं पात्नीवतमालभेत" इति यागं विधाय तं प्रकृत्य श्रूयते—पर्यग्निकृतं पात्नीवतमुत्सृजति" इति, तथापि पूर्वत्र गुणविधानासम्भवात् कर्मान्तरविधिरेवायम्।

तथाहि—न तावत् पूर्वस्मिन् यागे विकल्पेन पात्नीवतशब्दोपनीता एका देवता विधीयते, उत्पत्तिशिष्टदेवतावरोधात्। नापि पर्यग्निकरणम्, अतिदेशप्राप्तत्वात्। नाप्युत्सर्गः, उत्पत्तिवाक्येनोपलब्धत्वात्। तेन वायव्यवाक्यवत् पत्नीवच्छब्दाभिधेयद्रव्यदेवतान्वयार्थसङ्क्रान्तोऽयं विधिः कल्पितयजिशब्दप्रतिपाद्यं यागान्तरमेव द्रव्यदेवताविशिष्टं देवतागुणसामान्येन पूर्वयागप्रकृतिकम्, अग्निषोमीयप्रकृतिकमेव वा विदधातीति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि प्रकृतगुणविधिर्न सम्भवेत्। तत्र यद्यप्यन्ये गुणा न विधीयन्ते, तथापि पर्यग्निकरणान्तान्यङ्गान्येवात्र विधास्यन्ते। तथाहि—कथम्भावाकाङ्क्षी त्वाष्ट्रप्रयोगवचनः प्रकृतौ क्लृप्तोपकारकाण्यङ्गान्यपेक्षमाणः पर्यग्निकृतशब्दोपनीतान्येव तदन्तान्यङ्गान्यौपदेशिकानि गृहीत्वा चरितार्थो नातिदेशलभ्यान्यङ्गान्तराण्यपेक्षते। ननु "इडान्तातिथ्या सन्तिष्ठते" इत्यादिवच्च नात्र पर्यग्निकरणान्ताङ्गप्रतिपादकशब्दोऽस्ति। अतः कथं तदन्ताङ्गविधानम्? उच्यते—पर्यग्निकृतशब्दो हि निर्वृत्तयथाप्रसिद्धपर्यग्निकरणविशिष्टं द्रव्यमुपादत्ते। तच्च पर्यग्निकरणं पूर्वाङ्गेषु कृतेष्वेव प्रकृतौ निर्वृत्तं, तेन पर्यग्निशब्दोऽत्र प्रकृतचोदनाप्रतिपादितमेवाङ्गकलापमुपनयति। स एवात्रोत्सृजत्याख्यातवर्तिना

विधिनोत्सर्गानुवादेन विधीयते, नैवोत्सर्गः। विधिप्रत्ययसन्निधिविशेषेण भाष्यकारेणोक्तम्—उत्सर्गो विधीयत इति।

न च वाच्यम्—अतिदेशतोऽपि प्राप्स्यतः किं विधिनेति। उत्तराङ्गव्यवच्छेदफलत्वेन विधिसाफल्यात्। न चैवं सति परिसंख्या, अतिदेशप्राप्तेः प्रागेव विधिप्राप्तेः। नापि वाच्यम्—यदुत्सृजन्ति तत्पर्यग्निकृतमित्येतावतैव वाक्यसमाप्तौ पुनः पात्नीवतमिति विशेषणे विशिष्टानुवादात् वाक्यभेदः स्यादिति। यतो नोद्देश्यविशेषणं पात्नीवतशब्दार्थः विनापि विशेषणं प्रकरणादेव पर्यग्निकरणविधेः त्वाष्ट्रसम्बन्धात्। किञ्च नित्यानुवादोऽयम्। अनुवादस्य च यद्यप्यन्यत्प्रयोजनं नास्ति, तथापि भिन्नतद्धितान्तपदाभिधेयदेवतयोः समुच्चये एकेनापि तद्धितान्तेन पदेन तदभिधानं शक्यम्, नत्वेकतद्धितान्तपदाभिधेययोः समुच्चितदेवतयोरग्नीषोमयोरन्यतरपदेनेति ज्ञापनार्थं प्रकृतप्रत्यभिज्ञाद्योतनमेव प्रयोजनम्। अतः प्रकरणप्रत्यभिज्ञाते त्वाष्ट्रयाग एव पर्यग्निकरणान्ताङ्गरीतिविधानमिति सिद्धम्।

तदुक्तम्—

> प्रकृतप्रत्यभिज्ञानात् प्रयोगोऽन्योऽवगम्यते।
> पर्यग्निकरणात्तस्मिन्नङ्गरीतिर्विधीयते॥ इति।

(तं. वा., पृ. ६०७)

नन्वेवं सति गृहमेधीयेन सहास्य को विशेषः? उच्यते—अत्र

देवताभिधानं निराकृत्य गुणविधित्वव्युत्पादनेन स एव न्यायः स्थिरीक्रियत इति नानुपपन्नं किञ्चित् ।

प्रयोजनम्—पूर्वपक्षे केवलपत्नीवद्देवताकयागान्तरानुष्ठानम् । सिद्धान्ते नेति ।

सूत्रन्तु—पात्नीवते पत्नीवत्पदयुक्तवाक्ये पूर्ववत्वादुपदेशेनैव प्राकृतधर्मवत्वसम्भवात् पर्यग्निकरणान्ताङ्गातिरिक्ताङ्गानामवच्छेदः फलं विधेरित्यर्थः ॥

इत्यष्टमं पात्नीवताधिकरणम् ॥ ८ ॥

अथ नवममंश्वदाभ्याधिकरणम्

अद्रव्यत्वात् केवले कर्मशेषः स्यात् ॥ २. ३. २०. ॥

( विषयसंशयसङ्गतयः )

न कस्यचिदपि प्रकरणे श्रूयते "एष वै हविषा हविर्यजते, योऽदाभ्यं गृहीत्वा सोमाय यजते । परा वा एतस्यायुः प्राण एति योऽंशुं गृह्णाति" इति । अत्र सन्देहः—किं यागान्तरमेतद्गुणकम् ? उत ज्योतिष्टोमे यागे गुणविधिः ? इति । पूर्वं "पर्यग्निकृतं पात्नीवतमुत्सृजति" इत्यस्य यजिमदभिधानं निराकृत्येदानीं प्रसङ्गादंश्वदाभ्यवाक्ययोरपि यजिमदभिधानं निराक्रियते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—स्तुत्या तावदत्र विधिः

कल्पनीयः । अंश्वदाभ्यवाक्ये तावत् प्रधानत्वाद्याग एव कल्पयितुमुचितः। अनारभ्याधीतत्वेन तदनुवादेन ग्राह्यविशेषरहितग्रहणलक्षणगुणविधानासम्भवात्। सोमायेति चतुर्थ्या सोमो देवता, द्रव्यमपि "हविषा हविर्यजते" इत्यनुवादात्। तदेव हविषा हविर्यजति यदि सोमद्रव्येण सोममेव देवतां यजते। अदाभ्यमिति संज्ञाप्यदृष्टार्थस्य प्रधानयास्यैवंगुणफलोपबन्धनत्वार्थमुचिता। न दृष्टार्थस्य ग्रहणस्य, संज्ञां विनापि तत्र व्यवहारसम्भवात्। सोमद्रव्यकत्वाच्च ज्योतिष्टोमविकारोऽयम्। तथा च सति ग्रहणमपि प्रकृतिप्राप्तमेवानूद्यते। तेनादाभ्यवाक्ये तावत्सोमद्रव्यकं सोमदेवताकञ्च कर्म विधीयत इति सिद्धं कर्मनामधेयत्वम्। तत्र च ग्रहणे संस्कारत्वेन नामधेयसम्बन्धायोग्यत्वात् प्रत्ययार्थोऽत्र संज्ञावच्छिन्नो विधीयते—अंशुं कुर्यादिति। ग्रहणं त्वनूद्यते। अनुवादस्य च प्राप्तविषयत्वाद् ग्रहणलिङ्गेनैव ग्रहणत्वमस्योन्नीयते न ज्योतिष्टोमगतातिदिष्टद्रव्यदेवतासम्बन्धात्। यागरूपैवांशुसंज्ञिका क्रिया विधीयत इति यथाकथञ्चिदत्र पूर्वपक्षगमनिकेति। तस्मादंश्वदाभ्यवाक्ययोरपि यजिमदभिधानमिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि ग्रहणरूपसंस्कारमात्रपर्यवसितोऽयं

विधिर्भवेत् । तथाहि—न तावदत्र विधिः श्रूयते, किन्तु कल्पनयासौ । यदि विशिष्टयागविषयोऽसौ कल्प्येत, तदानीमंशुविशेषणविधिकल्पनम्, अतिदेशकल्पनं, फलकल्पनञ्चेति कल्पनागौरवमापद्येत । ग्रहणस्वरूपसंस्कारविधिकल्पनायां तु न कल्पनागौरवमिति तद्विधिरेव कल्प्यते, यागश्चानूद्यते । स च सोमद्रव्यश्रुतेः सोमयागो निर्णीयते । ननु सोमायेति नायं द्रव्यनिर्देशः । किं तर्हि ? देवतानिर्देशोऽयमित्युक्तम् । मैवम्; विधौ लक्षणाप्रसङ्गात् । किन्त्वनुशासनवशादियं तादर्थ्ये चतुर्थी द्रव्यनिर्देशार्था । तेनायं सम्बन्धः— सोमार्थमदाभ्यसंज्ञकग्रहणं कुर्यादिति । सामानाधिकरण्याददाभ्यस्य ग्रहणनामधेयत्वमेव । न च संस्कारे नामधेयानुपयोगः । "त्रैधातवीया दीक्षणीया भवति" इत्यादिषु त्रैधातवीयानामावच्छिन्नस्यैव संस्कारस्य दीक्षणीयादिकार्ये विधानोपयोगदर्शनात् । तेनात्र सोमस्य देवतात्वाभावात् "हविषा हविर्यजते" इत्यर्थवादादपि न सोमद्रव्यदेवतासम्बन्धप्राप्तिरिति न यागशङ्कासम्भवः । तस्माददाभ्ये तावन्न यागविधानम् । किन्तु (?) ज्योतिष्टोमानुवादेनादाभ्यसंज्ञकग्रहणान्तरविधानमेवेति । अंशौ यजिशब्दाभावाद्द्रव्यदेवतासम्बन्धाभावाच्च विधिरुन्नीयमानोंऽशुग्रहणविषय एवावतिष्ठते । ज्योतिष्टोमशब्दश्च (?) वैदिकगृह्यातिसामान्येन ज्योतिष्टोमस्यैवोपस्थितिर्निश्चीयते ।

तदुक्तम्—

ग्रहणं नामधेयञ्च केवलं यत्र गम्यते ।

यत्सालम्भादपि न्यूनं तदद्रव्यतयेष्यते ॥ इति ।

( तं. वा., पृ. ६०६ )

एतत्त्वभ्युपगमवादेनोक्तम् । वस्तुतस्तु श्रीमत्तैत्तिरीयशाखायां ज्योतिष्टोमप्रकरण एवानयोराम्नानमिति स्फुटं ज्योतिष्टोम एव ग्रहणविधानम् । तथा च सति यथा "सप्तदश सामिधेनीरनुब्रूयात्" इत्यनारभ्यवादेन सामिधेनीसप्तदशस्योत्पत्तिर्मित्रविन्दाध्वरकल्पायां प्रकरणाधीतेन विनियोगः, तथात्राप्यनारभ्यश्रुत्योत्पादकत्वमारभ्य श्रुतस्य च विनियोजकत्वमिति विवेक्तव्यम् । अतोऽत्रापि गुण-विधायकत्वम् , न तु यागविधायकत्वमिति सिद्धम् ।

प्रयोजनम्—पूर्वपक्षे ज्योतिष्टोमधर्मकं यागान्तरमनुष्ठेयम् । सिद्धान्ते तु ज्योतिष्टोम एव ग्रहणान्तरानुष्ठानमिति ।

सूत्रन्तु—अद्रव्यत्वाद्देवतासम्बन्धिद्रव्याभावात्केवले ग्रहणे श्रुते फलवतो ज्योतिष्टोमस्यैव ग्रहणं शेषो भवेदिति ॥

इति नवममंश्वदाभ्याधिकरणम् ॥ ९ ॥

## अथ दशमं चयनाधिकरणम्

## अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत॥ २. ३. २१ ॥

(विषयसंशयसङ्गतयः)

अस्त्यग्निः "य एवं विद्वानग्निं चिनुते" इति। एवं विधाय श्रूयते—"अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन, तमतिरात्रेण, तं षोडशिना" इत्येवमादि। अत्र सन्देहः—किमग्निशब्दो यागवचनो ज्योतिष्टोमादिभ्यः कर्मान्तरं 'चिनुते' इत्याख्यातेन विधीयते? उत द्रव्यवचनो ज्योतिष्टोमादिषु गुणविधानमेतत्? इति। पूर्वमंश्वदाभ्ययोर्यागविधिनिरासेन गुणविधानं प्रतिपाद्येदानीम् "अग्निं चिनुते" इत्यत्रापि प्रसङ्गेन प्रतिपाद्यते।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यद्यपि "अग्निं चिनुते", इत्यत्र यागो न श्रूयते, तथाप्युत्तरवाक्येऽग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थाविधिपरे "अथातोऽग्निमग्निष्टोमेनैवानुयजति" इत्यत्राग्निशब्दस्य यजिसामानाधिकरण्येनानुवाददर्शनात् "अग्निं चिनुते" इत्यत्राप्यग्निशब्दस्य यागनामत्वमिति निश्चीयते। नामधेयकरणञ्च तत्प्रख्यन्यायेनैव, "आहवनीये जुहोति" इति शास्त्रेणाहवनीयप्राप्तेः। तेनायं वाक्यार्थः—अग्निसंज्ञकं यागं कुर्यादिति। वचनात्

"इष्टकाभिरग्निं चिनुते" इत्यत्र प्राप्तं प्रत्ययप्रयोगार्थमनूद्यते। अव्यक्तचोदनात्वेनास्य ज्योतिष्टोमविकारत्वाद्द्रव्यदेवतालाभः। फलञ्च "ऋध्नोत्येव" इत्यर्थवादावगतं ऋद्धिरूपमेव। "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः" इत्यनेन (प्राप्तस्य) ज्योतिष्टोमपश्चाद्भावस्याग्निष्टोमादिवाक्यस्थेनानुशब्देनानुवादः। भवतु वा व्यधिकरणोऽयमग्निष्टोमशब्दः, तथाप्यग्निशब्दोऽयं यागसाधनम्। एवं हि तदा वाक्यार्थः—अग्निष्टोमेनाग्निमनुयजतीति। न चाग्नेरयागत्वेऽग्निष्टोमादिभिरनुयजनमुपपद्यते, तुल्यरूपाणामेव पौर्वापर्ययोगोपपत्तेः। यथा गच्छति देवदत्ते देवदत्तमनुगच्छतीति। तदत्र सामानाधिकरण्यपक्षे अग्निनामधेययागेऽग्निष्टोमादिवाक्यैरग्निष्टोमसंस्थादिरूपगुणविधानम्, एको यागः। वैयधिकरण्यपक्षे तु "अग्निष्टोमेनाग्निमनुयजति" इति यजतिसामानाधिकरण्येनाग्निष्टोमादिपदेनाग्निष्टोमादिनानासंस्थादिगुणफलवदुपात्तज्योतिष्टोमादेरग्निना सहानुशब्देन पौर्वापर्यविधानात् फलवत्सन्निधिन्यायेनाग्न्याख्ययागस्य तदङ्गत्वमेव। ऋध्नोतीति फलश्रुतिरर्थवाद एवेति विवेक्तव्यम्। अथवा "अथैष ज्योतिः" इति वाक्यप्रवृत्तिवेलायामनिरूपितार्थत्वात् "य एवं विद्वानग्निं चिनुते" इत्यत्रैतदनुवादेन गुणविधानं वा अग्निष्टोमादिसत्यज्येरोधात् (?)। विनियोगभङ्गस्य च गत्यन्तरे सत्यसम्भवात् सम्भवमात्रेणोपन्यस्तः।

ननु द्रव्यवचनोऽप्यग्निशब्दो (?) द्वितीयाश्रुतेस्तत्संस्कारचयनविधानमेव युक्तम् । न; अलौकिकाग्नेरनवगतोपयोगस्य संस्कारविधिवैयर्थ्यात् । अनारभ्याधीतत्वेन च प्रकरणाभावात् । पर्णतादेर्जुह्वादिवत्क्रत्वव्यभिचाराभावात् । अदाभ्यवच्छाखान्तरेऽपि प्रकरणे पुनः संकीर्त्तनानुपलब्धेश्च न क्रत्वन्वय्यग्निसंस्कारत्वम् । न च अृद्धिरूपफल एव गुणविधानम्, अनारभ्यश्रुतत्वेन प्रकृताग्निरूपाश्रयाभावात् । अनेनैवोभयसम्बन्धकरणे वाक्यभेदप्रसङ्गात् । तेनोक्तन्यायेनाग्निसंज्ञावच्छिन्नयागविधिरेवायम् । एवञ्च सति "अग्नेः स्तोत्रम्, अग्नेः शस्त्रम्, षडुपसदोऽग्नेश्चित्यस्य भवन्ति" इति यागाव्यभिचारिलिङ्गदर्शनान्युपपत्स्यन्त इति । एवं प्राप्तेऽभिधीयते—

द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २.३.२२. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि "अग्निं चिनुते" इत्यत्र ज्वलनं परित्यज्यायमग्निशब्दः कथञ्चिदपि यागनामधेयं भवेत् । तथाहि—रूढो ह्ययमग्निशब्दो ज्वलने । न चास्य मत्वर्थलक्षणादोषभयेन नामधेयत्वम्, निरूढार्थस्योत्तरपरत्वे "सोमेन यजेत" इतिवन्मत्वर्थलक्षणाया अदोषत्वात् । नापि रूढत्वेऽपि वाक्यभेदादीनामन्यतमन्नामधेयकारणमस्ति । यत्तु तत्प्रख्यमस्तीत्युक्तम्, तन्न; विधित्सितगुणप्रापिशास्त्रान्तरसद्भावे हि तत्प्रख्यन्यायो भवति ।

न चात्राग्निर्विधेयत्वेन प्रतीयते। किं तर्हि? द्वितीयासंयोगाच्चयनसंस्कार्यत्वेन। न चोत्तरवाक्ये यजिसामानाधिकरण्येनाग्निपदस्य नामधेयत्वनिर्णयः, अर्थान्तरप्रसिद्धस्य यजिसामानाधिकरण्यासम्भवात्। न च वैयधिकरण्येऽप्यग्निमनु यजतीत्यनुशब्दस्य सजातीयक्रियासापेक्षत्वादग्निशब्दस्य यागनामधेयत्वम्। 'श्राद्धमनुभुङ्क्ते' इति विजातीयक्रियापेक्षायामप्यनुशब्ददर्शनात्। यत्र त्वनुपात्तः क्रियाविशेषः 'देवदत्तमनुगच्छति' इत्यादौ, तत्र सजातीयक्रियाया एव बुद्धिसन्निधानात् तत्कल्पनमेवोचितम्। इह त्वग्निसम्बन्धचयनक्रियाया एव बुद्धिस्थीभूतत्वान्न सजातीयक्रियाकल्पनेति वैषम्यम्। अत एवार्थान्तरप्रसिद्धस्य यजिसामानाधिकरण्यासम्भवात् "अथैष ज्योतिः" इतिवत् पूर्ववाक्योपक्रान्तस्योत्पत्तिसमाप्तिरित्येतदपि निरस्तं वेदितव्यम्। तदुक्तम्—

अत्यन्तरूढशब्दत्वाद्वाक्यभेदादिभिर्विना।
ज्वलनं न परित्यज्य क्रतुरग्निः प्रतीयते॥ इति।

( तं. वा., पृ. ६११ )

तस्मादग्निशब्दस्य प्रसिद्धार्थग्राहित्वाच्चिनोतेश्च यागाभिधानाशक्तेर्द्रव्यदेवताभावात् द्वितीयानुरोधाच्चाग्निं चयनेन संस्करोतीत्येतावतैव चोदनार्थोऽवधार्यत इति। ननु चायं नाग्निसंस्कारः क्रत्वर्थोऽग्निर्निर्णीयते, तथाप्युत्तरवाक्ये "अग्निमनुयजति" इत्यत्र

कर्मप्रवचनीयद्वितीयायाः क्रियान्तरापेक्षत्वात् सन्निधेश्च यजनक्रियैव सम्बध्यते । तेनायमर्थः—चयनसंस्कृतमग्निमनु अग्निष्टोमादिभिर्यजनम् । एवञ्च सति चयनस्य क्रत्वर्थत्वात् "अग्निं चिनुते" इत्यत्रापि क्रत्वर्थत्वादाहवनीयविषयत्वमेव चयनस्य निश्चीयते । "अग्नेः स्तोत्रमग्नेः शस्त्रम्" इत्यादिवाक्येष्वग्निशब्दस्य द्रव्यपरत्वानुपपत्तेर्लक्षणया यागपरत्वमेव । न चात्र वाक्यद्वयेऽप्यग्निशब्दस्य मुख्यार्थत्वेऽपि काचिदनुपपत्तिरस्तीति न यागविधानम्, किन्तु प्रकृतिविकृत्योरेवाग्नेश्चयनसंस्कारगुणविधानमिति । न च वाच्यम्—प्रकृतावेव संस्कारो विधीयताम् । अतिदेशतस्तु विकृतौ प्राप्तिर्भविष्यतीति व्यर्थं विकृतौ विधानमिति । यतो निर्दिष्टाश्रयस्य फलसाधनत्वाभावार्थं चयनसम्बन्धिनो गुणात् फलकामस्याप्रवृत्तिः, उपदेशे तु प्रवृत्तिरिति युक्तमुभयत्र विधानादर्थवत्वम् ।

प्रयोजनम् — पूर्वपक्षेऽग्निनामावच्छिन्नयागान्तरानुष्ठानम् । सिद्धान्ते तु प्रकृतिविकृत्योश्चयनसंस्कारमात्रानुष्ठानमिति ।

सूत्रन्तु—वाक्यद्वयेऽपि द्रव्यमेवाग्निशब्दार्थो भवेत् । चयनचोदनायास्तदर्थत्वादग्न्यर्थत्वादित्यर्थः ॥

इति दशमं चयनाधिकरणम् ॥ १० ॥

## अथैकादशं प्रकरणान्तराधिकरणम्

### प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २. ३. २४. ॥

( विषयसंशयसङ्गतयः )

कौण्डपायिनामयने श्रूयते—"मासमग्निहोत्रं जुहोति । मासं दर्शपूर्णमासाभ्यां यजेत" इत्येवमादि । तत्र सन्दिह्यते—अग्निहोत्रे नियतयोश्च दर्शपूर्णमासयोर्मासो विधीयते कालः ? अथ नियताद्ग्निहोत्रान्नियताभ्यां च दर्शपूर्णमासाभ्यां कर्मान्तरम् ? इति । पञ्चसु भेदप्रमाणेषु पर्यवसितेष्विदानीमवसरप्राप्तः प्रकरणान्तरनिबन्धनः कर्मभेदः प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्रायमभिप्रायः पूर्वपक्षिणः—अग्निहोत्रदर्शपूर्णमासनाम्नोः प्रसिद्धत्वात् समभिव्याहृतस्य जुहोतेर्यजतेश्च तदर्थत्वे सेचनवत्प्रकरणान्तरे श्रुतत्वेनार्थान्तरविषयत्वम् । लोकप्रसिद्धार्थानामङ्गदादिशब्दनामपि वेदेऽर्थान्तरप्रसङ्गात् । तेन यत्र लोकप्रसिद्धार्थस्य प्रत्यभिज्ञायमानस्य वेदे नार्थान्तरत्वम्, तत्र वेद एव प्रकरणान्तरमात्रेणार्थान्तरमिति कुत एतत् ? तदुक्तम्—

अग्निहोत्रादिशब्देन पूर्वं कर्मावबोधितम् ।
न विप्रकर्षमात्रेण भेदरूपं प्रपद्यते ॥ इति ।

( तं. वा., पृ. ६१३ )

अतः पूर्वस्मिन्नेव कर्मणि जुहोतियजतिभ्यामनूदिते वाक्येन प्रकरणं बाधित्वा मासाख्यो गुणो विधीयते । न च यावज्जीवश्रुतिविरोधान्मासरूपः कालो विधातुं न शक्यत इति वाच्यम् । काम्यप्रयोगविषयत्वेनाविरोधात् । अथवा यावज्जीवाधिकारेऽपि समर्थासमर्थविषयतयापि व्यवस्थितविकल्पेनैवोपपत्तेः ।

( प्रभाकरमतेन सिद्धान्तः )

अत्रैके सिद्धान्तमेवमुपवर्णयन्ति—"उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहति" इति वाक्यमिदम् । अत्रोपसदुत्तरकालत्वं कर्तृबहुत्वं मासश्चेत्यनेके गुणाः श्रूयन्ते । न चैते गुणा नैयमिकाग्निहोत्रे सन्ति । न च प्राप्ते कर्मण्यनेकगुणविधानं सम्भवतीत्यनेकगुणविशिष्टकर्मान्तरविधानमेवैतत् । न चैवं सति गुणादेव भेदो न प्रकरणान्तरादिति वाच्यम् । यतोऽप्रकृतत्वं हि प्रकरणान्तरत्वम् । अप्रकृतत्वञ्च बुद्धिविच्छेदलक्षणम् । यदत्र नाम्नो बुद्धिसन्निधापकत्वम्, तत्प्रतिपक्षभूतानेकश्रुतेर्निरस्तम् । निरस्ते च तस्मिन् प्रतिपक्षभूतं प्रकरणान्तरमेव भेदकमिति । न च "मासं दर्शपूर्णमासाभ्याम्" इत्यत्रानेकगुणाभावान्नायं सिद्धान्तस्तस्यापीति वाच्यम् । यतो नात्र पूर्वपक्षसिद्धान्तयोर्मासरूपकालान्वयो होमस्य दर्शपूर्णमासयोर्वा । पूर्वत्र सायं प्रातः कालावरुद्धत्वादुत्तरत्र पौर्णमास्यमावा-

स्याकालावरुद्धत्वाच्च कालान्तरापेक्षाभावात्। किं तर्हि? उपसदन्वयः। तेन "मासं दर्शपूर्णमासाभ्याम्" इत्यत्राप्यनुषङ्गेणोपसदन्वयित्वादेवमन्वयः—मासमुपसद्भिश्चरित्वाग्निहोत्रं जुहोति, मासमुपसद्भिश्चरित्वा दर्शपूर्णमासाभ्यां यजेत इति। तेनोदाहरणद्वयेऽपि प्रकरणान्तरमेव भेदकमिति। न च वाच्यम्—एवं सति गुणादपि भेदसिद्धेः किं प्रकरणान्तरेणेति। यतो नानधिगतगन्तृ प्रमाणम्, किंत्वनपेक्षम्। अस्ति चानेकगुणश्रुत्यभावेऽपि 'फलं चाकर्मसन्निधौ' इत्यत्राप्रकृतत्वमात्रेण कर्मभेददर्शनम्। अतः प्रमाणान्तरं सिद्धमिति।

तदेतद्बालजल्पितम्; एवं सति गुणस्यैव भेदकत्वापत्तेः। तथा हि "आग्नेयोऽष्टाकपालो भवति" इत्यादिषु प्राप्ते कर्मण्यनेकगुणविधानस्यैव कर्मभेदकत्वं दृष्टम्, न तु बुद्धिविच्छेदकत्वम्। तदत्र प्रतीयमानादृष्टसामर्थ्यपरित्यागेन दृष्टसामर्थ्यकल्पनया बुद्धिविच्छेदमात्रोपक्षीणमनेकगुणविधानं व्यवस्थाप्यमानमनात्मवतामेव मनसि परं शोभते। किञ्च यत्र प्रकरणसन्निहितेऽपि कर्मण्यनेकगुणविधानस्य भेदकत्वम्, तत्र जघन्यनामधेयमात्रोपनीते कर्मणि गुणस्य बुद्धिविच्छेदमात्रहेतुत्वं न कर्मभेदकत्वमिति हास्यास्पदमेव। किञ्च कथं "मासं दर्शपूर्णमासाभ्यां यजेत" इत्यत्रानुषङ्गेणोपसत्सम्बन्धः, आकांक्षाया अभावात्। न चोत्पत्तिशिष्टपौर्ण-

मास्यमावास्याकालनिराकांक्षे कर्मणि मासाख्यकालासम्बन्धान्मासपदाकांक्षया सम्बन्धः, यतस्तिथ्यन्तरनियमस्तिथ्यन्तराकांक्षानिवर्त्तको भवति । ननु मासादितद्विजातीयकालाकांक्षानिवर्त्तकत्वेन "मासं दर्शपूर्णमासाभ्यां यजेत" इत्यन्वयोपपत्तेरनुषङ्गाभावेनानेकगुणविधानाभावान्नोदाहरणत्वं दर्शपूर्णमासवाक्यस्येति । न च प्रवेशासम्भवोऽपि, क्रियाद्वययोगात्, क्त्वाश्रुत्योपसद्विनियोगात्, जुहोतिना च मासविधानादिति । किञ्च भाष्यकारश्रुतमप्येकगुणफलमनादृत्य "मासमग्निहोत्रं जुहुति" इत्येतावन्मात्रमुदाहृतत्वात् , तदपि नाकलितं भाष्यं निद्रालुनेति यत्किञ्चिदेतदिति यथा वार्त्तिकमेव सिद्धान्तोऽभिधीयते ।

( वार्त्तिककारमतेन सिद्धान्तः )

सर्वत्र द्विविधः खलु कर्मणस्सम्बधी गुणो भवति—उपादेयोऽनुपादेयश्च । तत्रोपादेयस्य पूर्वावगतयथासिद्धयच्छब्दोपबद्धोद्देश्यकर्मतन्त्रतया विधियोग्यत्वात् दूरस्थकर्मानुवादेनापि यत्र कर्म तत्रायं कर्त्तव्य इत्येषा वचनव्यक्तिः । अनुपादेयस्य स्वतन्त्रस्य यथासिद्धस्येतरसम्बन्धार्थं यच्छब्देनोपादानादुद्देश्यत्वम् । तेनैषा वचनव्यक्तिः—यत्रैष तत्र कर्म कर्त्तव्यमिति । तदुक्तम्—

निमित्तफलसंस्कार्यकालदेशप्रभेदतः ।
गुणकर्मविधानार्थोऽनुपादेयतया स्मृतः ॥

स चायमनुपादेयं प्रति कर्मविधिर्देशकालौ प्रति प्रयोज्यत्वेन तयोः प्रयोगावच्छेदकत्वात् प्रयोगवच्छेदकत्वेनैव यथा संस्कार्ये व्रीह्यादाववघातादि विनियुज्यते । यथा वा स्वर्गे दर्शपूर्णमासादि । तयोश्चिकीर्षितत्वेन कर्मण एव तत्र विनियुक्तत्वात् । निमित्तस्य तु विधिमात्रान्वयिनो नियोज्यविशेषणतामात्रं, न तु कर्मणस्तत्र विनियोगः, कारकत्वेनानाश्रयणात्, किन्तु तस्मिन् सति कर्त्तव्यमित्येतावन्मात्रम् । तेन यत्रैष तत्र कर्मेति सप्तम्यपि नाधिकरणपरा, किन्तूपादेयानुष्ठानस्यानुपादेयतन्त्रतापरैव, फलनिमित्तयोर्व्यभिचारात् । तदेतयोः प्रयोगविनियोगयोः कर्मोत्पत्त्यपेक्षायां यदि तथाभूतस्यैवोत्पत्तिः प्रयोगविनियोगसापेक्षा तदैकवाक्यता महाप्रकरणे सन्निहिता समस्ति, तदा तदेवोत्पन्नं कर्म प्रयुज्यते विनियुज्यते चेत्यकर्मान्तरत्वम् । यथा "समे दर्शपूर्णमाभ्यां यजेत, पौर्णमास्यां पौर्णमास्या यजेत" इत्येवमादौ । यदा तु यथाभूतोत्पत्तिः सन्निहिता नास्ति, तदा तस्यैवोत्पत्तिपरत्वात्कर्मान्तरत्वम् । न चेह कुण्डपायिनामयने तादृशहोमयागोत्पत्तिः सन्निहिता समस्ति इति कर्मान्तरत्वमेवेति । तदुक्तम्—

उपादेयो गुणो यत्र भवेत्प्रकरणान्तरे ।
तत्राकर्मान्तरं युक्तमुद्देश्ये त्वन्यकर्मता ॥ इति ।

(तं. वा., पृ. ६१५)

न च वाच्यम्—अत्राप्यग्निहोत्रादिनाम्नैवोत्पत्त्युपस्थितेर्न कर्मान्तरत्वमिति । यतो जुहोतीत्यत्रासत्त्वभूतः पूर्वापरीभावापन्नो धात्वर्थः प्रतीयते । नामपदात्तु लिङ्गसंख्यायोग्यः सिद्धरूपः । अतो नानेनोत्पत्तिप्रत्यभिज्ञानम् । तदुक्तम्—

धात्वर्थोऽपि यथाख्यातेऽसत्त्वभूतः प्रतीयते ।
सत्त्वाभिधायिना नाम्ना तादृङ्नैवोपनीयते ॥ इति ।

(तं. वा., पृ. ६१६.)

न च नामसमभिव्याहृतस्याख्यातस्य गुणभूतनामपारतन्त्र्यभावः, अनुपादेयकालानुरोधेन प्रकृतानुपस्थापकत्वादिति । किञ्च न ह्येकप्रसरयोर्नामाख्यातयोरेकेनोत्पत्त्युपस्थापनमपरेण प्रयोगविनियोगयोरन्यतरविधानमिति प्रयोजनभेदः सम्भवति, किन्त्वेकार्थत्वमेव । तत्रापि ह्याख्यातस्य वाक्यार्थीभूतभावनाभिधानेन प्राधान्यान्नाम्नस्तत्परतन्त्रत्वमेव । तदत्र विध्याख्यातसमभिव्याहृतस्य नाम्नो यथाविध्येवार्थस्तावदवश्यं वर्णनीयः । विधेश्च प्रयोगपरत्वान्नाम्नोऽपि प्रयोगार्थत्वम् । न च तस्यैव सकृदुच्चरितस्योत्पत्त्यर्थत्वमपीति उत्पत्तिविधिकल्पनया कर्मान्तरम् । "पौर्णमास्यां पौर्णमास्या यजेत" इत्यादौ पुनरुत्पत्तेः प्रकरणप्रत्यभिज्ञानान्नामपदस्य प्रयोगैक्यपरत्वेनोभयपरत्वाभावान्नायं दोष इति ।

यत्र तु प्रकरणान्तरेऽपि "अतिरात्रश्चतुर्विंशः, प्रायणीयमहः

चत्वारोऽभिप्लवाः, षडहाः पूर्णा' इत्याद्यभिधाय 'ऋद्धिकामाः सत्रमासीरन्" इति श्रूयते, तत्रातिरात्रादिशब्दानां पूर्वकर्मोपस्थापकत्वम् । अत्र सर्वत्र सर्वस्य विनियोजकाख्यातैकवाक्यतापन्नस्य पूर्वोपस्थितकर्मणो विनियोजकत्वमिति उपस्थापकविनियोजकशब्दभेदात् कर्मान्तरत्वम् । यदि तु तत्राप्यनुबन्धभूतयजतिधात्वर्थः श्रूयेत, तदा असत्वभूतत्वात्तस्यातिरात्रादिनामभिः प्रत्यभिज्ञानाभावात्तत्रापि स्यादेव कर्मान्तरत्वम् । तत्रासीरन् उपेयुरित्यत्रानुतिष्ठेयुरित्यवगम्यमानकर्मान्तरम्, तथापि तु भावनोपस्थापकत्वाभावात् प्रकरणान्तरन्यायेन भावना भिन्नैव । सा च नामोपस्थापितपूर्वकर्मणैव विशेषिता फलसम्बन्धिनीति निर्णीयते । तदुक्तम्—

> भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः ।
> नाम्ना हि तदुपादानमासनोपायिचोदिते ॥ इति ।

(तं. वा., पृ. ६१७.)

"सर्वेभ्यो दर्शपूर्णमासौ सर्वेभ्यो ज्योतिष्टोमः" इत्यत्रानारभ्याधीतत्वेऽपि अनुपादेयं प्रत्युपादानेऽपि न कर्मान्तरत्वम् । एवं हि श्रूयते—"एकस्मै वान्या इष्टयः कामायाह्रियन्ते सर्वेभ्यो दर्शपूर्णमासौ, एकस्मै वान्ये यज्ञक्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः" इति । अत्र चान्यशब्दार्थस्यैव पूर्वावगतप्रतियो-

ग्यन्तरनिरूपणीयत्वाद्भाविविनियोगसन्दर्शनेन दर्शपूर्णमासज्योतिष्टोमापेक्ष एवायमन्यपदार्थ इति निश्चीयते । न च विनियोगवाक्यगतदर्शपूर्णमासापेक्ष एवायमन्यशब्दः, समानरूपस्यैवान्यशब्दार्थप्रतियोगित्वात् । न ह्यन्यो ब्राह्मण इत्युक्ते प्रतियोगी शूद्रः प्रकाशते । किं तर्हि ? ब्राह्मण एव । तद्वदत्राप्यन्या इष्टयोऽन्ये यज्ञक्रतव इति पूर्वावगतोपादानात्, पूर्वावगतप्रतियोगिनिरूपणीय एवायमन्यपदार्थः । तेनान्यशब्दबलेनैव दर्शपूर्णमासज्योतिष्टोमोत्पत्तेरुपस्थितत्वात् "सर्वेभ्यो दर्शपूर्णमासौ" "सर्वेभ्यो ज्योतिष्टोमः" इत्येतयोस्तत्तत्क्रतुफलविनियोगपरत्वेऽप्युत्पत्यन्तराक्षेपपरत्वाभावान्न कर्मान्तरत्वमिति । "य इष्ट्या पशुना सोमेनाग्रयणेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा" इत्यत्रापि यच्छब्दोपबद्धयजिनैव पूर्वोत्पत्त्युपस्थापनादेवाकर्मान्तरत्वम् । "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यत्र तु स्वयमेव वार्त्तिककारपादैः ज्योतिष्टोमप्रकरणे श्रूयत इत्यभिधानात् प्रकरणान्तरेण भेदो नाशङ्कनीयः । (१) एवंकृते नाख्यातकीनपूर्वकर्मावगतिः कृतापि नामधेयं बाधितुमुत्सहते । तस्मादनुपादेयं प्रत्युपादानबुद्धिविच्छेदाभ्यां विशिष्टकर्मोत्पत्तेर्भेदसिद्धिः । अग्निहोत्रादिनामधेयं तु नाम्ना तद्धर्मातिदेशाभाविगुणयोगनिरीक्षणेन गौणमेवाध्ययनविधिना स्वीकृतमिति न किञ्चिदनुपपन्नमिति ।

प्रयोजनम्—पूर्वपक्षे प्रकृतिभूतस्यैवाग्निहोत्रस्य प्रकृतयोश्च दर्शपूर्णमासयोर्मासमनुष्ठानम् । सिद्धान्ते तु शब्दप्रयोगे मासविशिष्टाग्निहोत्रादिकर्मान्तरानुष्ठानमिति ।

सूत्रन्तु—प्रकरणान्तरे प्रकरणान्तरनिमित्तकं प्रयोजनान्यत्वं कर्मान्यत्वमित्यर्थः ॥

इत्येकादशं प्रकरणान्तराधिकरणम् ॥ ११ ॥

अथ द्वादशं फलसंस्कार्याधिकरणम्

फलं चाकर्मसन्निधौ ॥ २. ३. २५ ॥

( विषयसंशयसङ्गतयः )

अनारभ्य किञ्चिच्छ्रूयते—"आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः, अग्नीषोमीयमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः" इति । तत्र सन्दिह्यते—किं प्रकृतेष्वाग्नेयादिषु फलं विधीयते ? उत प्रकृतेभ्यः कर्मान्तरम् ? इति । इदानीं यो नाम पूर्वोदाहरणे प्रकरणान्तरकृतञ्च कर्मभेदं मन्यते, (?) न बुद्धिविच्छेदानुपादेयं प्रत्युपादनयोरेव भेदकत्वप्रतिपादनार्थमिदमारभ्यते । तत्र पञ्चस्वनुपादेयेषु कालदेशयोरनुपादेयत्वं स्वभावादेव सुसंज्ञानम् । निमित्तस्यापि निमित्तत्वादेव यस्मिन् देयनिष्पन्ने

कर्मद्वयस्य कार्यता तन्निमित्तम् । न च तदुपादेयं सम्भवति । तेनैतेषां तुल्यत्वात् पूर्वाधिकरणविषयत्वमेव । तत्र कालस्योदाहरणमुक्तमेव । देशस्यापि "दक्षिणेन तीरेण स्वरस्वत्या आग्नेयेनाष्टाकपालेन" "शम्यापरामीयात्" इत्यादि । अत्र च यद्यप्यतिरात्रादिवद्यजिश्रवणं नास्ति, तथापि द्रव्यदेवतासम्बन्धस्य यज्यनुमानव्यतिरेकेणापर्यवसानादग्निहोत्रादितुल्यत्वमेवेति कर्मान्तरत्वमेव । निमित्तस्यापि "सत्रायावगूर्य विश्वजिता यजेत" "साम्युत्थाने विश्वजित्"इत्याद्यपि पूर्वाधिकरण एव द्रष्टव्यम् । इह तु फलसंस्कार्ययोरेव वचनीयमस्तीति विचारविषयत्वम् । तत्र फलोदाहरणमुक्तमेव । तत्तुल्यन्यायतया संस्कार्यस्याप्यनुक्तमपि द्रष्टव्यम् । "त्रैधातवीया दीक्षणीया भवति" इत्यादि ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—फलस्य तावत् सुव्यापारनिष्पाद्यत्वान्नानुपादेयत्वम् । संस्कार्यस्यापि यजमानादेः क्रियासिद्ध्यर्थमुपादेयत्वमेव । तेनैतयोरनुपादानाभावान्न कर्मभेदः । ननु उपादेयत्वेऽप्येतयोः प्राप्तत्वेनाविधेयत्वात् कर्मैवात्र विधातव्यम् । तच्च न संविहितमिति अग्निहोत्रादितुल्यमेवेति । मैवम्; अग्निहोत्रे खलु जुहोतीत्याख्यातेन नामासम्बद्धः प्रयोगो विधीयते । नामधेयश्च तत्परतन्त्रत्वान्न पूर्वकर्मोत्पत्त्युपस्थापकमिति कर्मान्तरत्वम् ।

इह तु पूर्वावगतस्य कर्मणो द्रव्यदेवतासम्बन्धेनैवोपस्थापितत्वात् तदेव कर्मफलस्य काम्यमानत्वेन उपादेयस्य च प्राप्तत्वेनाविधेयत्वेऽपि तस्मिन् विधीयमानं कर्म न भिद्यत इति वैषम्यम्। एवं "त्रैधातवीया दीक्षणीया भवति" इत्यत्रापि "मासं दर्शपूर्णमासाभ्यां यजेत" इतिवद्यज्यश्रवणात् त्रैधातवीयानाम्नस्तत्परतन्त्रत्वाभावात् पूर्वसिद्धस्य स्थानस्थितत्रैधातवीयोपस्थापकत्वमेव। तथाच प्रकरणं बाधित्वा वाक्येन पूर्वसिद्धैव त्रैधातवीया संस्कार्यभूता यजमानसंस्कारत्वेनैव दीक्षणीया....विधीयते। तेन प्रकरणान्तरन्यायस्याप्यनुपादेयं प्रत्युपादानबुद्धिविच्छेदरूपस्याभावादत्राप्यकर्मान्तरत्वमेवेति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि देशकालयोरिव फलसंस्कार्ययोरपि स्वभावसिद्धमनुपादेयत्वं ब्रूमः। किं तर्हि? समभिव्याहृतक्रियापेक्षम्। तथाहि—अन्यार्थमनुत्पाद्यत्वं ह्यनुपादेयत्वम्। तद्देशकालनिमित्तानामेव परं स्वभावसिद्धम्। फलसंस्कार्ययोस्तु न समभिव्याहृतक्रियार्थमुत्पाद्यत्वम्। किं तर्हि? क्रियाया एव तदर्थमुत्पादनमिति तदपेक्षमनुपादेयत्वमेव। नापि पूर्वावगतस्य कर्मणो द्रव्यदेवतासम्बन्धेनोपस्थापनम्। यतो ह्यनुमानद्वारेण द्रव्यदेवतासम्बन्धस्य यागप्रतिपादकत्वम्। न चैकस्यैव

यजिपदस्य पूर्वोत्पत्त्युपस्थाने फलं प्रति विनियोगे चैकदा करणत्वं सम्भवतीति फलसमभिव्याहृतस्य कर्मणः श्रुतस्येवानुमितस्याप्यग्निहोत्रादिवदनुपादेयं प्रत्युपादान·······शब्दाभ्यां कर्मान्तरत्वमेवेति। ननु "त्रैधातवीया दीक्षणीया भवति" इत्यत्र न यजिः श्रूयते। नापि द्रव्यदेवतासम्बन्धेनानुमीयते, तदभावात् त्रैधातवीयापदस्याख्यातपरतन्त्रत्वाभावादतिरात्रादिवाक्यवत् पूर्वकर्मोपस्थापकत्वमव्याहतमेवेति कथं कर्मान्तरत्वम्। उच्यते—स्यादेवं यदि सकृदुच्चरितत्रैधातवीयापदं पूर्वकर्मोपस्थापनं कार्यान्तरे च विनियोगं कर्तुमुत्सहते। तदत्र कार्यान्तरविनियोगस्यावश्यकत्वादनपेक्षितपूर्वकर्मोपस्थापनं कर्मान्तरमेव विनियुक्तम्। अतिरात्रादिवाक्येषु विनियोजकोपस्थापकशब्दभेदोपपत्तिरिति प्रागेवैतदुक्तम्। एतच्च "साम्युत्थाने विश्वजित्" इत्यत्रापि समानमिति सिद्धमत्रापि प्रकरणान्तरादेव कर्मभेद इति।

प्रयोजनम्—पूर्वपक्षे दर्शपूर्णमासप्रयुक्तेनापवर्गसम्बन्धद्वयमेव फलान्तरमिति न पृथगनुष्ठानम्। सिद्धान्ते तु दर्शपूर्णमासप्रयोगाद्बहिरेवाग्नेयधर्मानुष्ठानमिति।

सूत्रन्तु—अकर्मसन्निधौ श्रूयमाणं फलं कर्मभेदं करोतीत्यर्थः॥

इति द्वादशं फलसंस्कार्याधिकरणम्॥ १२॥

## अथ त्रयोदशं प्रकरणान्तरप्रत्युदाहरणाधिकरणम्

### संन्निधौ त्वविभागात् फलार्थेन पुनः श्रुतिः ॥ २. ३. २६॥

( विषयसंशयसङ्गतयः )

अस्त्ययवेष्टिः—"आग्नेयोऽष्टाकपालः पुरोडाशो भवति" इत्येवमादिः। तां प्रकृत्योच्यते "अन्नाद्यकामं याजयेत्" इति। तत्र सन्देहः—किं कर्मान्तरमवेष्टेः ? उतावेष्टिरेव ? इति। पूर्वमसन्निधेरनुपादेयं प्रत्युपादानार्थं कर्मभेदः। इदानीं सर्वेषामेवासन्निधानस्य प्रत्युदाहरणं सञ्जातशङ्कानिरासेन व्युत्पादयितुमिदमारभ्यते। तत्र फलपदमुपलक्षणार्थं, सर्वाण्युद्देशादीन्यनुपादेयान्यत्रोदाहर्त्तव्यानि। तद्यथा "समे दर्शपूर्णमासाभ्यां यजेत, पौर्णमास्यां पौर्णमास्या यजेत, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, शेषात्स्विष्टकृतं यजति" इति।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—अनुपादेयानां देशादीनामुद्देश्यत्वं तावद्व्यवस्थितम्। तद्यदि कर्माण्यनूद्यन्ते, तदा तान्यप्युद्देष्टव्यानि। न चोद्देश्यानामुद्देश्यैः सम्बन्धः सम्भवति। तदुक्तम्—

विहितस्य विधिर्नास्तीत्यसंवादः प्रसज्यते।
अनूद्यमानमुद्देश्यं न चात्रोद्देशसम्भवः॥ इति।

(तं. वा., पृ. ६१४)

तेनापूर्वमेव कर्मात्र देशादिसम्बन्धेन प्रयोज्यत्वेन फलादिसम्बन्धेन विनियोज्यत्वेन विधेयम् । न चापूर्वस्य कर्मणः प्रयोगो विनियोगो वा पूर्वकर्मोत्पत्तिमन्तरेण भवतीति प्रकरणसन्निहितायाः पूर्वकर्मोत्पत्तेरसत्कल्पत्वात्कर्मान्तरमेवेति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यपूर्वकर्मात्र विधीयेत । न च विहितविधानासम्भवादपूर्वविधिः, व्यापारभेदात् स्वरूपज्ञानपरोऽप्युत्पत्तिविधिर्देशकालनिमित्तसम्बन्धेन च प्रयोगपरः, फलसंस्कार्यसम्बन्धेन विनियोगपरः । अतस्तस्यैव कर्मणस्तद्भेदेन विधितात्पर्यभेदोपपत्तेर्न विहितविधानासम्भवात् कर्मान्तरत्वम् । तथाच सति नैकस्यैव विधेरुभयपरत्वम् । अगतया ह्येतत् स्वीक्रियते । अत्र च प्रकरणमेवोत्पत्त्युपस्थापकं गत्यन्तरमस्तीति न तत्कर्मभेदः । तदुक्तम्—

भिन्ने हि विधिसामर्थ्ये उत्पत्तिविनियोगयोः ।
तत्र सत्याङ्गतावेकमसत्यां तद्द्वयं भवेत् ॥ इति ।

(तं. वा., पृ. ६१६)

उत्पत्तिविनियोगयोरित्युत्पत्तिप्रयोगयोरित्यपि द्रष्टव्यम् । तेन निमित्तेऽपि कर्मप्रयोगविधानस्य चोत्पत्तिविध्याक्षेपकत्वम् । अतः प्रकरणसन्निहितायामुत्पत्तौ फलसंस्कार्यौ प्रति विनियोगपरत्वेन

विध्याख्यातस्य स्वरूपफलत्वाभावाद्देशकालनिमित्ते च प्रयोगपरत्वेन स्वरूपपरत्वाभावान्न कर्मान्तरत्वम् । देशकालयोस्त्वङ्गेनाप्राप्तत्वात् प्रकरणोत्पन्नकर्मानुवादेनापि विधानोपपत्तेः सुतरामकर्मान्तरत्वम् । न चोद्देश्यत्वाद्देशकालयोरनूद्यत्वमेव न विधेयत्वम्, उपादेयत्वात् कर्मणो विधेयत्वमेव नानूद्यत्वम् । विध्यनुवादयोरप्राप्तितन्त्रत्वेनोपादेयोद्देश्यत्वमुत्पत्त्यन्तरापेक्षात् कर्मान्तरत्वमेवेति ।

प्रयोजनम्—पूर्वपक्षे अव्यक्तचोदनात्वात् सोम एव हविः । सिद्धान्ते तु पुरोडाश एव हविरिति ।

सूत्रन्तु—सन्निधौ कर्मोत्पत्तिस्सम्भवति अविभागाद्बुद्धिविपरिवृत्तेः फलाद्यर्थेनैव पुनः श्रुतिर्नोत्पत्त्यर्थत्वेनेत्यर्थः ॥

इति त्रयोदशं प्रकरणान्तरप्रत्युदाहरणाधिकरणम् ॥१३॥

## अथ चतुर्दशमाग्नेयस्तुत्यर्थताधिकरणम्

### आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत २. ३. २७ ॥

(विषयसंशयसङ्गतयः)

दर्शपूर्णमासयोः "आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति" इति विधाय पुनरुच्यते—"आग्नेयोऽष्टाकपालोऽमावास्यायां भवति" इति । तत्र सन्देहः—किममावास्यायां द्विराग्ने-

येन यष्टव्यम् ? उत सकृत् ? इति । पूर्वाधिकरणेनैव प्रकरणान्तराधिकारे पर्यवसिते सतीदानीमुपादेयोपबन्धवाक्यचिन्ताप्रसङ्गादिदं चिन्त्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—अनुपादेयकालसम्बद्धस्याग्नेयस्य पुनः श्रुतस्य 'सन्निधौ त्वविभागात्' इत्यनेन न्यायेनापवादान्मा भूत् प्रकरणान्तरनिमित्तको ह्याग्नेयाद्भेदः, अभ्यासनिमित्तकस्तु भविष्यति । तथाहि—न तावदाग्नेययागे किञ्चिदनेन विधीयते, द्रव्यदेवताकालानां पूर्वत्रैव प्राप्तत्वात् । न चास्यार्थवादत्वम् । आग्नेयविधायकवाक्यस्य दूरस्थत्वेन तदेकवाक्यत्वाभावात् । नापि सन्निधानादैन्द्राग्नस्तुतिरियम् । आग्नेयमात्रकीर्त्तनेनैन्द्राग्नस्तुत्यनवगतेः । विधित्वे च सति विहितविधानासम्भवादभ्यासादेव कर्मभेद इति । तदुक्तम्—

विधिश्रुतिरनन्यर्था भेदिकेत्यवधारिता ।
तादृशी चेयमित्यर्थाद्द्विराग्नेयः प्रयुज्यताम् ॥ इति ।

( तं. वा., पृ. ६२१ )

तेनाभ्यासोक्तहेतुत्वादाग्नेयाभिधानं कर्मद्वयमेति । एवं प्राप्तेऽभिधीयते—

अन्यर्थो वा पुनःश्रुतिः ॥ २. ३. २९ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्यैन्द्राग्नस्तुत्यर्थोऽयमाग्नेयार्थवादो न भवेत् । तथाहि—न तावदत्र विधिः श्रूयते । न च कल्पयितुमपि शक्यते, ऐन्द्राग्नविध्येकवाक्यतया तदर्थवादत्वेनैवोपपत्तेः । न चात्रैन्द्राग्नस्तुतिः न प्रतीयत इति वाच्यम् । केवलाग्नेयकीर्त्तनादैन्द्राग्नस्तुतिः प्रतीयते । अयं खल्वस्यार्थः—केवलाग्निदेवतस्तावदाग्नेयः प्रशस्तो ज्ञात एव । तस्मादपीन्द्रयुक्ताग्निदेवतः सुतरां प्रशस्त इति । तदुक्तम्—

प्रशस्तशब्दैरवधारितेन वाक्यान्तरात्केवलदेवतेन ।
कर्त्तुं सहेन्द्रेण पुनः प्रशंसां पुनः श्रुतिः सम्यगिहाश्रितेयम् ॥

इति । (तं॰ वा॰, पृ. ६२३.)

प्रयोजनम्—पूर्वपक्षे आग्नेययागयोर्भिन्नत्वात्पुरोडाशद्वयोपादानम् । सिद्धान्ते त्वेकत्वादाग्नेयस्यैकपुरोडाशोपादानमिति । सूत्रन्तु—आग्नेयस्य पुनः श्रुतिरन्यार्था आग्नेयस्तुत्यर्थेत्यर्थः ॥

इति चतुर्दशमाग्नेयस्तुत्यर्थताधिकरणम् ॥१४॥

इति बालवलभीभुजङ्गापरनाम्नो भट्टश्रीभवदेवस्य कृतौ
तौतातितमततिलके द्वितीयस्याध्यायस्य तृतीयपादः ॥

## अथ द्वितीयाध्यायस्य चतुर्थः पादः

### तत्र प्रथमं यावज्जीवाधिकरणम्

### यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥२.४.१॥

( विषयसंशयसङ्गतयः )

बह्वृचब्राह्मणे श्रूयते—"यावज्जीवमग्निहोत्रं जुहोति" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इति । तत्र सन्देहः—किं कर्मधर्माभ्यासो यावज्जीवकता ? उत कर्तृधर्मनियमो वा यावज्जीविकेति । अस्यायमर्थः—"अग्निहोत्रं जुहोति" इत्युत्पन्नस्य "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति फले विनियोगः श्रूयते । पुनरपि "यावज्जीवमग्निहोत्रं जुहोति" इति श्रूयते । तत्र किं काम्य एव प्रयोगे यावदुपबद्धजीवनावच्छिन्नः कालोऽङ्गतया विधीयते ? ततश्च "सायं जुहोति" "प्रातर्जुहोति" इत्यनेन विशेषित एक एव काम्यः प्रयोगो यावज्जीवमभ्यसितव्यः । अथ यावज्जीवं तदुद्देशेनान्य एव प्रयोगो नैमित्तिको विधीयते । ततश्च "सायं जुहोति" "प्रातर्जुहोति" इत्येकवाक्यतावशात् सायं प्रातः समापनीय उपात्तदुरितक्षयफलः, अक्रियानिमित्तप्रत्यवायपरिहारप्रयोजनो वा यथानिमित्तमनुष्ठेय इति । पूर्वत्र शब्दान्तरादिसहायोत्पत्तिविधि-

प्रमाणके कर्मभेदे पर्यवसिते सतीदानीं शब्दान्तरादिसहायप्रयोगविधिप्रमाणकः प्रयोगभेदो निरूप्यते। न च प्रयोगविधिव्यापारस्य चतुर्थाध्यायविषयत्वादिहानिरूपणीयमिति वाच्यम्। यतोऽनुष्ठानगताङ्गपरिमाणादिविषयः प्रयुक्तिलक्षणो व्यापारस्तत्र निरूपणीयः, प्रयोगभेदविषयस्तु द्वितीयाध्यायविषय एवेति न विरोधः।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—जीवनावच्छिन्ने हि काले विधीयमाने प्रकृतस्य कर्मणः कथंभावाकाङ्क्षालक्षणं प्रकरणमनुगृह्यते, कालस्याङ्गत्वेन ग्रहणात्। दृष्टश्च लक्षणयापि यावच्छब्दोपबद्धस्य कालपरत्वम्—'यावद्दोहं स्वपिति' इत्यादिषु। तदुक्तम्—

कर्मस्थो हि कथंभावस्तदङ्गमभिवाञ्छति।
कालोपदेशपक्षे च तत्तथैवोपयुज्यते॥ इति।

(तं. वा., पृ. ६२४)

एवं सति कल्पनालाघवं भवति। इतरथा प्रयोगान्तरमपूर्वान्तरञ्च कल्प्येत। न च यावज्जीवं दर्शपूर्णमासैकप्रयोगत्वे सति "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति विरोधः। अस्य साभिप्रायेणैव इष्ट्वेति........। न चान्यतन्त्रमध्ये कथमन्यस्यानुष्ठानमिति। वचनबलादेवान्यप्रयोगमध्यानुष्ठानाविरोधात्।

न च यावज्जीवपदस्य काललक्षणैव दोषः। सिद्धान्तेऽपि निमित्तत्वलक्षणाया अविशिष्टत्वात्। न च णमुला निमित्तत्वमभिधीयते, "अभिक्रामं जुहोति" इत्यत्र व्यभिचारात्। नापि जुहोतेरभ्यासलक्षणादोषः, जीवनावच्छिन्नकालविधिसामर्थ्यादेवाभ्यासाक्षेपसिद्धेर्लक्षणावैयर्थ्यात्। न च काम्यत्वेन सर्वाङ्गोपसंहारासमर्थस्याधिकाराद्यावज्जीवश्च सर्वाङ्गोपसंहाराभावादशक्यार्थोपदेश इति वाच्यम्। अङ्गोपदेशवशेनोद्भूतशक्तेरेवाधिकारस्वीकारात्। तेन यावज्जीवं सायं प्रातरुद्भूतशक्तिरग्निहोत्रादिशास्त्रार्थः। तस्माद्यावज्जीवं काम्य एक एव साभ्यासोऽयमग्निहोत्रप्रयोगो दर्शपूर्णमासप्रयोगश्च, न तु प्रयोगान्तरं विधीयत इति। एवं प्राप्तेऽभिधीयते—

## कर्त्तुर्वा श्रुतिसंयोगात् ॥ २. ४. २. ॥

### ( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि कालविधौ यावज्जीवजुहोतिशब्दयोर्लक्षणाद्दत्त्वं दोषो न भवेत्। तथाहि—न तावद्यावज्जीवशब्देन कालोऽभिधीयते, सामस्त्यविशिष्टजीवनमात्राभिधायित्वात्। नापि जुहोतिशब्देनाभ्यासोऽभिधीयते, होमावच्छिन्नभावनामात्राभिधायित्वात्। नापि जीवनावच्छिन्नकालविधिसामर्थ्यादेवाभ्यासाक्षेपसिद्धिः, विकल्पासहत्वात्। स किमा-

त्विप्यमाणोऽशाब्दः ? शाब्दो वा ? न तावदशाब्दः शास्त्रार्थो भवति । शाब्दत्वे च जुहोतेरतत्परत्वाद्दुर्वारैव लक्षणेति । तेन स्वार्थपरित्यागेन यावज्जीवं जुहोतीत्याख्याताभ्यां कालाभ्यासावेव लक्षितौ विधातव्याविति विधावेव लक्षणा प्रसज्येत । 'यावद्दोहं स्वपिति' इत्यादिषु वर्त्तमानापदेशत्वेन यथाप्राप्तानुवादलक्षणेयं गत्यन्तरासम्भवान्न दोषायेति । तेन यावत्क्रतुभाविजीवनमेव निमित्तभूतं यावज्जीवशब्देन प्रतिपाद्यते ।

ननु णमुला निमित्तत्वाभिधानान्निमित्तत्वपक्षेऽपि लक्षणा-दोषोऽभिहितः । नैतत्; श्रौतत्वान्निमित्तभावस्य । तथाहि—समान-कर्त्तृकधात्वर्थसम्बन्धे णमुलोऽनुशासनात् । यथा 'कारं संहरति' इति । जीवनक्रियाया होमक्रियासम्बन्धस्तावदभिधानतः प्रतीयते । न च जीवनस्य होमसम्बन्धः साध्यत्वेन, साध्यताप्रतिपादकश्रु-त्याद्यभावात् । नापि साधनत्वेन, यावच्छब्दोपलब्धस्य जीवनस्य सामस्त्याभावेन साधनत्वासम्भवात् । न चैकस्यैव काम्यप्रयोगस्य यावज्जीवमनभ्यस्यमानत्वात् पर्यायेणैव जीवनानां प्रत्यभ्यासमन्वयो भविष्यतीति वाच्यम् । तथा सति विधावेवाभ्यासलक्षणादोषस्य दुष्परिहरत्वात् । निमित्तस्य तु साध्यसाधनभावव्यतिरेकेण निमि-त्तेनैवान्वयोपपत्तेर्यावदुपबद्धस्य जीवनस्य निमित्तत्वमेव युक्तम् । तेन यद्यपि यावदुपबद्धस्य जीवनस्य जीवसमभिव्याहृतक्रियासम्बन्ध-

मात्रमभिहितम्, तथापि क्रियान्वयार्थत्वात्समुच्चारणस्य क्रियान्वयस्य च निमित्ततान्यतिरेकेणासम्भवान्निमित्ततारूपसम्बन्धविशेषप्रतिपादनार्थमेव पुनः समुच्चारणेऽध्ययनविधेस्तात्पर्यमुन्नीयते। तेन यथा 'गौर्गच्छति' इत्यत्र गवादिशब्दानामाख्याभिधानेऽपि अभिधानस्य क्रियासम्बन्धार्थत्वात् क्रियासम्बन्धस्य च व्यक्तिव्यतिरेकेणासम्भवादभिधानस्य व्यक्तिपर्यन्तत्वाद्व्यक्तेरपि श्रौतत्वम्, तथात्रापि सम्बन्धमात्राभिधानस्य निमित्तपर्यन्तत्वान्निमित्तमपि श्रौतमेव। एतच्चाकृत्यधिकरणे विस्तरेण प्रतिपादितम्। कालस्य तु श्रुतिशब्दाभिधेयसामान्यव्यक्तिरूपत्वाभावादर्थान्तरत्वेन लक्षणाविषयत्वमेवेति लक्षणादोषो दुष्परिहर एव। तथा जुहोतिशब्दे चाभ्यासलक्षणा प्रागुक्तैवेति। निमित्तपक्षे तु प्रतिनिमित्तं कृत्स्नशास्त्रार्थसमाप्तेः प्रयोगभेदादभ्यासाभावेन नाभ्यासलक्षणादोषः। किं तर्हि? द्वयोरेव श्रुतिवृत्तत्वमिति। तदुक्तम्—

> यावज्जीवपदाख्यातश्रुतिवृत्तत्वसम्भवः।
> मत्पक्षे भवतस्त्वत्र लक्षणावृत्तता भवेत्॥ इति।

(तं. वा., पृ. ६२४)

तेन "अग्निकामं जुहोति" इत्यादिषु सम्बन्धान्तरप्रतिक्षेपकस्य यावच्छब्दोपबन्धस्याभावादिति साध्यसाधनलक्षणोऽपि सम्बन्धोऽविरुद्ध एव। ननु यावच्छब्दोपबन्धोऽपि गामुलो निमित्तार्थत्वं

व्यभिचरत्येव । यथा 'यावज्जीवं भुङ्क्ष्व' इति । सत्यमेवं, किन्तु विध्याख्यातसमभिव्याहृतस्य यावदुपबन्धस्य णमुलो निमित्तत्वा-व्यभिचारस्योक्तत्वात्तथाभूतस्यैव निमित्तार्थत्वम् । तच्च निमित्तत्वं न धात्वर्थे, न च भावनायां, नापि फले, मानान्तरविरोधेन तेषु निमित्तत्वासम्भवात् । निमित्ते सत्यपि तेषामनिष्पत्तेः । किन्तु विधेः शब्दव्यापारात्मनः कर्त्तव्यतायाश्च धात्वर्थसम्बन्धे सति, तस्यैवावश्यकर्त्तव्यतावगमात् । न चैवं सत्याहारविरोधाद-शक्यानुष्ठेयत्वम् , "सायं जुहोति प्रातर्जुहोति" इति सायंप्रातः-कालावच्छिन्नस्यैव जीवनस्यापेक्षावशेन निमित्तत्वाभ्युपगमात् । तदुक्तमाचार्येण—

जीवनादेर्निमित्तस्य साम्यात् कालो विशेषकः ।
निमित्तार्थस्तत्र जातिकर्मणोऽवश्यकार्यता ॥ इति ॥

तेनायं वाक्यार्थः—सायं प्रातर्जीवनवानग्निहोत्रं जुहुया-देवेत्यवश्यकर्त्तव्यता होमस्य प्रतीयते । तदेवावश्यकर्त्तव्यं लोकेऽ-वगतम्, यस्याकरणे प्रत्यवायो भवति। तत्राप्यभावस्य भावोत्पत्ति-हेतुत्वाभावात् तत्कालीनान्यक्रियाकरणस्यैव प्रत्यवायोत्पत्तिहेतु-त्वम् । न च प्रत्यवायनिवृत्तिः फलं, प्रागभावरूपत्वेन साध्यत्वा-भावात् । किन्तु प्रयोजनमात्रन्त्वत्र विध्यवरुद्धभावनायाः

पुरुषसमीहितसाध्याकाङ्क्षायां बुभुक्षुमुमुक्षुसाधारणत्वान्नैमित्तिक-विधेरुभयसाधारणमुपात्तदुरितक्षयरूपमङ्गीक्रियते ।

न चैवं साध्यभेदाद्भावनाभेद इति वाच्यम् । अग्निहोत्रस्य काम्यप्रयोगे स्वर्गः फलम्, इह दुरितक्षय इति । 'सन्निधौ त्वविभागात्' इत्यनेन न्यायेनोत्पत्तिपरत्वाभावात् पुनःश्रुतेस्तु प्रयोगान्तरविधानेनैवार्थवत्वात् ।............स्यैवाग्निहोत्रस्य दर्शपूर्णमासयोश्चैकः काम्यप्रयोगः । अपरस्तु यावन्निमित्तमवश्यानुष्ठेयः । अत एव किञ्चिदङ्गहानेऽपि न वैगुण्यम् । यावज्जीवमवश्यं कर्त्तव्यं सर्वाङ्गोपेतश्चेति विरोधेन किञ्चिदङ्गाभावस्यापि विध्यनुमतत्वात् । तेन श्रुत्यनुरोधेन जीवननिमित्तः प्रयोगभेदोऽत्र विधीयत इति सिद्धम् ।

प्रयोजनम्—पूर्वपक्षे जीवनलक्षितकालस्याङ्गत्वेनाग्निहोत्र-दर्शपूर्णमासविकृतावतिदेशः । सिद्धान्ते तन्नेति ।

सूत्रन्तु—कर्त्तृधर्मः प्रयोगो विधीयते "यावज्जीवं जुहोति" इति श्रुतिसंयोगात् श्रुतिवृत्तत्वादित्यर्थः ॥

इति प्रथमं यावज्जीवाधिकरणम् ॥ १ ॥

## अथ द्वितीयं शाखान्तराधिकरणम्

**नामरूप-धर्मविशेष-पुनरुक्ति-निन्दा-शक्ति-समाप्ति-वचन-प्रायश्चित्ता-न्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदस्स्यात् ॥ २. ४. ८ ॥**

### ( विषयसंशयसङ्गतयः )

इह शाखान्तराण्युदाहरणम्—काठकं कालापकं पैप्पलादकम् इत्येवमादीनि। तत्र सन्देहः—किमेकस्यां शाखायां यत्किञ्चिदग्निहोत्रादि श्रूयते तच्छाखान्तरे पुनः श्रूयमाणं भिद्यते ? उत न भिद्यते ? इति। पूर्वं प्रयोगभेदं प्रतिपाद्येदानीं भेदापवादः क्रियते।

### ( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—'एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात्' इति न्यायेनाभ्यासात् कर्मभेदः प्रतिपादित एव। स चाभ्यासोऽप्यविशिष्ट एव। न च शाखान्तरे गुणफलाद्यर्थान्तर····
······ ······ ····र्था पुनः श्रुतिर्भवेत्। तेन कर्मैव विधेयम्। तच्च विहितविधानासम्भवात् कर्मान्तरमेवेति। न च कर्मैकत्वेऽपि भिन्नाध्येतृबोधनेनैव शाखान्तरपुनःश्रुतेरर्थवत्वान्नाभ्यासाद्भेद इति वक्तव्यम्। प्रतिशाखमध्येतृभेदनियमे प्रमाणाभावात्। यद्यपि "स्वाध्यायमधीयीत" इति स्वाध्यायगतमेकत्वं श्रूयते, स्वाध्याय-

शब्देन च स्ववेदशाखाभिधीयते, तथापि सामर्थ्यतोऽर्थज्ञानार्थत्वेन प्राप्तस्य स्वाध्यायस्याध्ययनेन संस्कारविधावुद्देश्यत्वात्, उद्देश्यविशेषणस्य च "ग्रहं सम्मार्ष्टि" इतिवदविवक्षितत्वादेकस्य नानाशाखाध्ययनमविरुद्धम् । किञ्च यद्येकस्यैकशाखाध्ययनमेव नियतं भवेत्, तदा वेदान्तरीयशाखाध्ययनमपि न प्राप्नोति । तथा च सति

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥ (मनु. ३. २.)

इति व्याहन्येत । तेन पुनः श्रुतेरनन्यार्थत्वादभ्यासात्तावद्भेदः ।

किञ्च यत्रैकस्यामेव शाखायां कथञ्चिद्बुद्धिच्छेदमात्रेणानुपादेयं प्रत्युपादानादग्निहोत्रादीनां कर्मान्तरत्वम्, तत्र शाखान्तरेषु सुतरामेव बुद्धिविच्छेदादनुपादेयं फलं प्रत्युपादानात् प्रकरणान्तरादपि कर्मभेदः । तथा काठकादिकर्मनामभेदादपि भेदः, एकत्रैवार्थेऽनेकशब्दस्यान्याय्यत्वात् । तथा गुणादपि भेदः । एकस्यां शाखायामग्नीषोमीयमेकादशकपालमामनन्ति । अपरस्यां द्वादशकपालम् । तदुक्तम्—रूपात् इति । तथैकस्यां कारीरीवाक्यमधीयानास्तैत्तिरीया भूमिभोजनमाचरन्ति, अपरस्यां नेति । तदुक्तम्—धर्मविशेषात् इति । तथा कस्याञ्चिदुदितहोमनिन्दा, कस्याञ्चिदनुदितहोमनिन्दा । तदुक्तम्—निन्दावचनादिति । तथा प्रतिशाखं नानाधर्मान् सङ्कलय्य न कश्चिद्विरोधादनुष्ठातुं शक्नोति, कर्मभेदे तु शक्नोतीति ।

तदुक्तम्—अशक्तेश्चेति। तथा कस्याश्चिदनुदितहोमव्यतिक्रमे प्रायश्चित्तमामनन्ति, कस्याश्चिदुदितहोमव्यतिक्रमे। तदुक्तम्—प्रायश्चित्तविशेषादिति। तदत्र सर्वत्रैव परस्परविरोधात् पूर्वत्रासम्भवद्गुणादेव भेदः। तेनात्राभ्यासप्रकरणान्तरसंज्ञागुणैर्भाष्योक्तपञ्चलिङ्गदर्शनैश्च शाखान्तरेषु कर्मभेद एवेति। एवं प्राप्तेऽभिदध्महे—

**एकं वा संयोगरूपचोदनाख्याविशेषात् ॥ २. ४. ६ ॥**

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि प्रत्यभिज्ञानसिद्धमत्र कर्मैकत्वं न भवेत्। तथाहि—शाखान्तरेऽपि सैव संज्ञा, तदेव द्रव्यदैवतम्, त एव गुणादयः, तदेव च फलम्, स एव धात्वर्थावच्छिन्नभावनाविषयविधिः। तदेवं प्रत्यभिज्ञासमूहसिद्धे कर्मैकत्वे.....यद्यपि किञ्चिदधिकं न्यूनं वा प्रतीयेत, तथापि गोर्गडुनि जाते लाङ्गूले वा च्छिन्ने प्रत्यभिज्ञासिद्धमेकत्वं नोज्झति तथात्रापीति। तदुक्तम्—

सर्वत्र प्रत्यभिज्ञानात् संज्ञारूपगुणादिभिः।
एककर्मत्वविज्ञानं न शाखास्वपगच्छति ॥ इति।

(तं. वा., पृ. ६३५)

न चान्यद् भेदकारणमस्ति। नन्वभ्यास एव भेदप्रमाणमित्युक्तम्। नैवम्; एकैका हि शाखा स्वाध्यायशब्दवाच्या प्रतिपुरुषं व्यवस्थाप्याध्ययनविधिना प्रमाणीकृता। प्रमाणी-

भूतानेकवाक्य·········तः प्रतीयमानं कर्माभ्यासतो भिद्यते । न चोभयशाखागतं वाक्यमेकस्य प्रमाणम्, येनानर्थक्यभिया कर्म भिन्द्यात् । तदुक्तम्—

स्वाध्यायग्रहणेनैका स्वशाखा परिगृह्यते ।
एकार्थानां विकल्पश्च कर्मैकत्वे भविष्यति ॥ इति ।

(तं. वा., पृ. ६३५)

ननु सामर्थ्यतोऽर्थज्ञानार्थतया प्राप्तं स्वाध्यायमुद्दिश्याध्ययनसंस्कारविधावेकत्वमविवक्षितमित्युक्तम् । अतः कथमेकस्मिन् पुरुषे शाखान्तरस्याप्रामाण्यमित्युच्यते । स्यादेवं यद्यध्ययनविधेः प्राक्स्वाध्यायस्यार्थपरत्वनिश्चयो भवेत्, किन्तु लोकानुसारेण शक्त्यवधारणमात्रम् । अध्ययनविधितस्तूच्चारणतात्पर्याधीनमर्थपरत्वमिति अर्थवादाधिकरण एव प्रपञ्चितम् । तेन लोकानुसारेण शक्त्यवधारणे जातेऽप्युच्चारणतात्पर्यमन्तरेण स्वाध्यायस्यार्थपरत्वानिश्चयान्न सामर्थ्यविनियुक्तस्वाध्यायोद्देशेनाध्यनसंस्कारविधिः, किन्तु स्वाध्यायकर्मकस्यैवाध्ययनस्यार्थज्ञानं प्रत्युपादीयमानत्वात् स्वाध्यायस्याप्युपादेयत्वमिति तद्गतमेकत्वं विवक्षितमेवेति एकैव शाखैकस्याध्येतुः प्रमाणमिति नाभ्यासात्कर्मभेद इति । वेदान्तरीयशाखाध्ययनं तु वचनवशादेव । न चैवं वेदान्तरीयशाखावगताग्निहोत्रादिकर्मणामभ्यासाद्भेदप्रसङ्गः । समुच्चयापादकवचनवशेन सुतरामभेदावगतेः । तथा हि—कर्मावबोधं प्रति तत्राप्युपादीयमान

एव समुच्चीयत इत्येकः कर्मप्रयोगः । तद्व्रतसाहित्यार्थं (?) त्रिवेदीमेलोद्भव एकस्मिन्नेव कर्मणि वेदभेदेन समुच्चयावगमात् । एतेन प्रकरणान्तरगुणयोरपि भेदकत्वं प्रत्युक्तमेव । काठकादिसंज्ञा तु न कर्मणः, किन्तु कठेन प्रोक्तमिति प्रवचननिमित्ता हि सा । न च कर्म प्रोच्यते, किं तर्हि ? ग्रन्थ एव । भवतु वा कर्मणः संज्ञा, तथाप्युत्पत्तिसंयोगिनी हि संज्ञा भेदिका । तदुक्तम्—'संज्ञा चोत्पत्तिसंयोगात्' इति । न चेयं तथेति न कर्मभेदिका । लिङ्गदर्शनानि तु सूत्रभाष्यवार्त्तिकानुसारेण कर्मैकत्वाविरोधेन व्याख्येयानि । तदुक्तम्—

तस्मात्तदेवेति मते न कर्म भिन्नं कथञ्चित्प्रतिशाखमिष्टम् ।
न कारणं सप्तममस्ति चान्यदतो यथोक्तैव तु भेदसिद्धिः ॥ इति ।

( तं. वा., पृ. ६४६ )

प्रयोजनम्—पूर्वपक्षे यथाशाखं व्यवस्थिताङ्गानुष्ठानम् । सिद्धान्ते तु सर्वशाखाविहिताङ्गानुष्ठानमिति ।

सूत्रन्तु—एकमेव कर्मफलसंयोगाद्द्रव्यदेवतधात्वर्थभावनाविषयविधिसंज्ञानामविशेषात् प्रत्यभिज्ञास्फुटत्वादित्यर्थः ॥

इति द्वितीयं शाखान्तराधिकरणम् ॥ २ ॥

इति द्वितीयाध्यायस्य चतुर्थः पादः ॥

इति बालवलभीभुजङ्गापरनाम्नो भट्टश्रीभवदेवस्य कृतौ तौतातितमततिलके द्वितीयोऽध्यायस्समाप्तः ॥